शं :- ईम् ऐसा कहने पर भी मकार के बाद ऐसा स्वर निकलता है। वह भी फिर अर्धमात्रा होगी। नहीं। ॐ में और ई में फरक है। वहां अन्तिम स्वर में तालव्यता की झलक है। ॐ में कण्ठोष्ठता की झलक है। क्योंकि अ उ म इन तीनों का वहां लय है। जैसे जल में शक्कर लीन हो गया तो भी मधुर लगेगा।

**उकारे लीयतेऽकार उः मकारे विलीयते।**
**ते सर्वे चार्धमात्रायामिति कण्ठोष्ठता स्फुटा॥५१४॥**

अकार उकार में लीन होता है। उकार मकार में और सभी अर्धमात्रा में। अतः कण्ठोष्ठता स्पष्ट है। अ का कण्ठ, उ का ओष्ठ और ओ का स्वयं कण्ठोष्ठ है।

**नन्वामित्यत्र कण्ठोष्ठ्य मामयोस्तत्त्वतो, न तत्।**
**अच्साहाय्याद्धलुच्चार्यो नाकारे त्वोष्ठता यतः॥५१५॥**

शंका होगी आम् बोलने में वैसी अर्धमात्रा है। अ का कण्ठ और म का ओष्ठ है। नहीं। अच् की सहायता से व्यञ्जनों का उच्चारण है। महाभाष्य में कहा है-न पुनरन्तरेणाचं व्यञ्जनानामुच्चारणमपि भवति। अतः अर्धमात्रा पर 'आ' का ही प्रभाव रहेगा। अर्थात् कण्ठ्यता मात्र रहेगी। दीर्घ प्लुतादि में अच् का ही वर्चस्व रहता है। वही अन्त्य मात्रा में भी आयेगा।

**व्यञ्जनं हल्स्वरप्राप्तौ भवेच्चाविद्यमानवत्।**
**एवंविधहला नैव चार्धमात्रा प्रभाविता॥५१६॥**

'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद् भवति।' स्वर में व्यञ्जन अविद्यमानवत् होता है ऐसा भी बताया है। अतः व्यञ्जन से अर्धमात्रा प्रभावित नहीं होती। अतः मकार अर्धमात्रा में लीन भी हो जाये तो भी स्थान स्वरादिका उस पर प्रभाव नहीं होगा।

**किमुक्तं भवतीत्यन्य-मात्राभ्योऽतिविलक्षणा।**
**ॐ महांस्तल्लयिन्यर्धमात्रोत्कृष्टान्यतोऽखिलात्॥५१७॥**

आप के कथन का क्या तात्पर्य? यही कि अन्य मात्राओं से यह विलक्षण

है। ॐ मन्त्र स्वयं महान है उसका लय जिस अर्धमात्रा में लीन होता है वह अन्य समस्त से उत्कृष्ट है (आम् ईम् आदि का दृष्टान्त वृथा है)।

**ननु च ध्वनिरेवायं न तु मात्रेति चेच्छृणु।**
**पुष्पदन्तो ध्वनिभिरित्याख्याय स्वीचकार तत्॥५१८॥**

यह चतुर्थ अर्धमात्रा जिस को कह रहे हैं वह तो ध्वनि है, मात्रा नहीं मालूम पड रही है। इस शंका में हम यह कहेंगे कि गन्धर्वराज पुष्पदन्त ने 'तुरीयं ते धाम ध्वनिभिरवरुन्धानं' कहकर ध्वनि स्वीकार किया है।

**रहस्यं सद्गुरुमुखादेव ज्ञातव्यमित्यहम्।**
**प्रागेवावोचि तदलं बहुनेत्युपरम्यते॥५१९॥**

इस पर आप का क्या कहना है? ऐसे पूछने पर हमने जो उत्तर पहले कहा वह है कि निगूढ रहस्य को सद्गुरुमुख से ही सुनिये और यहीं पर हम लंबी व्याख्या से उपराम लेते हैं।

**मेधा हि लौकिकप्रज्ञा प्रणवः पिहितस्तया।**
**तत्स्वरूपमतो ज्ञेयं सद्गुरुभ्यो न संशयः॥५२०॥**

अ आ इत्यादि के समान ॐ भी एक अक्षर है ऐसी लौकिक प्रज्ञा से ॐकार स्वरूप आच्छादित है।

## श्रुतं मे गोपाय

**श्रुतिजन्यपरिज्ञानं श्रुतमित्यभिधीयते।**
**काण्डत्रयोक्तविषयं सर्वमेव श्रुतं भवेत्॥५२१॥**

श्रुति से उत्पन्न ज्ञान श्रुत है। कर्मकाण्डादि तीनों का ज्ञान श्रुत है।

**इतिहासपुराणादि यच्चैतदुपबृंहणम्।**
**तज्जन्यमपि विज्ञानं श्रुतान्तर्गतमिष्यते॥५२२॥**

वेदार्थोपबृंहक इतिहास पुराणादि से जन्य ज्ञान भी श्रुत है।

**गुरुप्रवचनोद्भूतं तादृशं ज्ञानमेव च।**
**श्रुतान्तर्भावमेवैति तदप्यत्र विवक्षितम्॥५२३॥**

वेदार्थोपबृंहक आचार्य प्रवचन से जन्य ज्ञान भी श्रुतान्तर्गत ही है।

स्पृणोतु मेधयेत्युक्तं स्वमेधामननादिजम्।
यज्ज्ञानं तदपीह स्याच्छ्रुतशब्दविवक्षितम्॥५२४॥

स मेन्द्रो मेधया स्पृणोतु से प्रार्थित स्वमेधा अर्थात् मननादिजन्य ज्ञान भी यहां श्रुत शब्द से विवक्षित हो सकता है।

गोपाय तदिदं सर्वं न विस्मृतिविपर्ययैः।
विनाशमेतु येनाहं भवेयं पुरुषार्थभाक्॥५२५॥

इन सब ज्ञान की रक्षा करो विस्मरण एवं विपर्यय से नष्ट न हो, हम पुरुषार्थभागी हों।

प्राग्विकर्मोद्भवात् पूर्ववासनोद्भवनादपि।
कामक्रोधादिवशगा विस्मरन्ति श्रुतं बुधाः॥५२६॥

पूर्वजन्मादिकृत विकर्म से प्राचीन नानावासनोद्भव से कामक्रोधादि वशीभूत मनुष्य श्रुत को भूल जाया करते हैं।

दुर्मेधसां च संसर्गात् तद्वाक्यश्रद्धया तथा।
विपर्ययः संशयो वा मा तौ भूतां कदापि मे॥५२७॥

दुष्टों के संसर्ग से (कहीं पूर्वकर्ममात्र से भी यह च कार का अर्थ है) और उनकी बातों पर श्रद्धा करने से कभी विपर्यय और संशय हो जाता है वह भी न हो।

विषया उपतिष्ठन्ते पूर्वकर्मोद्भवात् स्वयम्।
तत्र प्रसक्तः पतितस्तत्त्वज्ञानाच्च्युतो भवेत्॥५२८॥
वासनोद्भवतश्चैव कामक्रोधसमुद्भवात्।
श्रुताभिभूतेर्जायन्ते यतयः पामरोपमाः॥५२९॥

पूर्वकर्मानुसार सब के सामने नानाविध विषय स्वयं उपस्थित होते हैं। उन में यदि आसक्त प्रसक्त हो तो संन्यासी भी ज्ञानच्युत पतित हो जाते हैं। यदि वासना उद्भूत हो गयी तो कामक्रोधादि पैदा होते हैं। शास्त्रश्रवण उनके सामने अभिभूत हो जाता है तब यति भी पामर जैसे हो जाते हैं।

ज्ञानेन सकृदज्ञाने नाशिते हेत्वभावतः।
कामादयो न जायन्ते इति केचित्प्रचक्षते॥५३०॥

तन्न सत् प्रक्रियेयं हि प्रत्यक्षेण विरुध्यते।
स्थूलाज्ञाने विनष्टेऽपि सूक्ष्मरूपेण तत्स्थितेः ॥५३१॥
संस्कारात्मकमज्ञान - मुद्बोधकसमागमे।
स्थौल्यं याति तदा काम-क्रोध-लोभादिरुद्भवेत्॥५३२॥

ज्ञान से एक बार अज्ञान नष्ट हो गया तो हेतु न होने से कामक्रोधादि भी नहीं होंगे। ऐसे कुछ लोग कहते हैं। किन्तु यह प्रत्यक्ष-विरुद्ध है। स्थूलाज्ञान नष्ट हो किन्तु संस्काररूप से वह रहेगा उद्बोधक के आने पर फिर स्थूल होगा।

दृष्टाः सौभरिदुर्वासोविश्वामित्रपराशराः।
कामक्रोधादिवशगाः यत्नात्पश्चात् समुद्धृताः॥५३३॥

शास्त्रों में सौभरि, दुर्वासा, विश्वामित्र, पराशरादि तत्त्वज्ञानी होने पर भी कामक्रोधादि के अधीन हुए। पश्चात् काफी यत्न से ऊपर उठे।

प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः।
संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः॥५३४॥
इत्याह याज्ञवल्क्योऽपि तन्नामोपनिषत्पदे।
ततश्च प्रार्थ्यत इदं श्रुतं गोपाय मे प्रभो॥५३५॥

संन्यासी ऐसे ऐसे देखने में आते हैं जो प्रमादी हैं, बहिर्मुख हैं, चुगलखोर हैं, झगडालू हैं। पूर्वकर्म वासनारूपी दैव से उन का अन्तःकरण दूषित है। इस प्रकार याज्ञवल्क्योपनिषत् में याज्ञवल्क्य ने कहा। अतः यह प्रार्थना की जा रही है कि हे प्रभु मेरे श्रौत ज्ञान की रक्षा करो।

एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः।
आत्मक्रीड आत्मरति-रात्मवान् समदर्शनः॥५३६॥
एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम्।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्॥५३७॥
इत्यादिकं तु सकलं शास्त्रं दृष्टफलेरणम्।
मा भूत्कामादिरित्येवं यमिनामोमुपासिनाम्॥५३८॥

न त्वपूर्वविधिर्ह्यत्र न वा नियमकृद्विधिः।
एतत्समर्थनं चैव विस्पष्टं वचनान्तरे॥५३९॥
द्विरात्रं न वसेद् ग्रामे भिक्षुर्यदि वसेत्तदा।
रागादयः प्रसज्येरंस्तेनासौ नारकी भवेत्॥५४०॥
तस्माच्छ्रुतं मे गोपाये-त्यत्रैते नियमा अपि।
सह प्रार्थनया पाल्या भवन्ति यतिनामिति॥५४१॥

ॐकार जप मुख्यतया संन्यासियों के लिये ही है। श्रुतं मे गोपाय इस प्रार्थना के साथ 'एकश्चरेन्महीमेताम्' इत्यादि नियमों का भी पालन करना चाहिये। अकेला विचरण करे, ग्राम में एक ही रात रहे इत्यादि विधि दृष्ट फल है। यह न अपूर्वविधि है और न नियमविधि है। यह 'द्विरात्रं न वसेत्'-'रागादयः प्रसज्येरन्' इस परिणाम कथन से स्पष्ट है। इसलिये श्रुतरक्षणार्थ कामादि परित्याग तथा तदर्थ विचरण एकरात्र प्रवास मात्रादि नियम पालन करना यहां अभिप्रेत है।

ननु संस्कारनाशोऽपि भवत्यन्ते प्रबोधतः।
भूयश्चान्ते विश्वमायानिवृत्तिरिति हि श्रुतिः॥५४२॥
तत्रान्तश्चरमावस्था पूर्णसाक्षात्कृतौ भवेत्।
पूर्णसाक्षात्कृतिश्चैव न रागादिमतो भवेत्॥५४३॥

पू. - ज्ञान से ही संस्कारनाश भी होगा। भूयश्चान्ते विश्वमाया निवृत्तिः ऐसी श्रुति। विश्वमाया से मोह, संस्कारादि सभी मायान्तर्गत विवक्षित है। इसका उत्तर है-अन्ते का अर्थ है चरमावस्था में। चरमावस्था पूर्ण साक्षात्कार होने पर ही आयेगी। किन्तु रागद्वेषादि हो तो पूर्ण साक्षात्कार ही नहीं होगा।

ज्ञानाभ्यासेन रागादिः शैथिल्यं याति सत्कृतेः।
ततश्च ज्ञाननैर्मल्यं क्रमेणान्योन्यसंश्रयात्॥५४४॥
परमोत्कर्षसम्प्राप्तज्ञानमन्त इतीरितम्।
विश्वमायानिवृत्तिश्च ततस्तच्चोदितं स्मृतौ॥५४५॥
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥५४६॥

अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः।
नित्याद्याश्रमकर्माणि जपध्यानादिकं यतः॥५४७॥

ज्ञानाभ्यास करते रहेंगे तो कामक्रोधादि शिथिल होते जायेंगे। सत्कृति-सत्कर्म आश्रम कर्म भी उस में हेतु है। उससे ज्ञान निर्मल होता जायेगा। इस प्रकार क्रमिक अन्योन्य सहकार से ज्ञान परम उत्कर्ष को प्रास होगा। यही श्रुति-'भूयश्चान्ते' यहां अन्ते का अर्थ है उससे विश्वमाया रागद्वेषादि सहित समस्त माया की निवृत्ति होगी। यही व्यासजी का भी कहना है। नित्यनैमित्तिकैः इत्यादि। संन्यासियों का भी नित्य नैमित्तिक प्रणव जप गुरुवन्दना वेदान्त चिन्तनादि है। उससे ज्ञान निर्मल होता जायेगा। उस अभ्यास से परिपक्व ज्ञान होगा और कैवल्य प्रास होगा।

भगवत्प्रार्थनाप्यत्र कारणं भवतीत्यतः।
उक्तं 'श्रुतं मे गोपाये' त्येवं श्रुत्यापि सादरम्॥५४८॥

नित्यादि के साथ यह भगवत्प्रार्थना भी कारण है यही श्रुत मे गोपाय का संकेत है।

मननादिषु संयोज्य धूत्वाऽसंभावनादिकम्।
गोपाय मे श्रुतं ज्ञानमित्यपि व्याचचक्षिरे॥५४९॥

मुझे मननादि में लगाकर असंभावनादि निवृत्त कर श्रुत ज्ञान की रक्षा करो यह भी व्याख्या है।

अन्तकाले समायाते नानारोगादिभिर्नराः।
विस्मरन्ति श्रुतं सर्वं तद्गोपायेति चेतरे॥५५०॥

औरों की व्याख्या में-मरण समय में रोगादि पीडा से लोग सब भूल जाते हैं किन्तु हे परमात्मा मेरा श्रुत ज्ञान नष्ट न हो, उसकी रक्षा करो।

इदं तु बोध्यमोंकारो ह्यत्रोपास्य इतीरितम्।
ॐकारप्रत्ययावृत्तिरतः स्याद् भाष्यकृन्मतम्॥५५१॥
ॐ प्रत्ययावृत्तिरेव मानसस्तज्जपोऽपि च।
प्रणवोपासना तस्माज्जपरूपापि सिध्यति॥५५२॥

बाह्ये जपेऽपि भवति मानसो जप एष तु।
यो यत्क्रतुः स तत्कर्म करोतीति श्रुतत्वतः ॥ ५५३ ॥
अत्यभ्यासदशायामप्यतिसूक्ष्मा प्रवर्तते।
मानसी वृत्तिरिति तज्जपोऽप्यधिकशक्तिदः ॥ ५५४ ॥
तदर्थभावनं चेत्स्यात्ततोऽप्यधिकशक्तियुक्।
शक्यं कर्त्तुं च युगपन्मनसोऽवयवित्त्वतः ॥ ५५५ ॥
क्षणानामतिसूक्ष्मत्वात् क्षणभेदेऽपि न क्षतिः।
इति व्याचक्षते धीराः परे वेदान्तवेदिनः ॥ ५५६ ॥

'ॐकारोह्यत्रोपास्यः' ऐसा भाष्य में कहा है। उपासना प्रत्ययावृत्ति को कहते हैं। ॐकार प्रत्ययावृत्ति ही तो ॐकार मानस जप है। बाह्य जप में भी मानस जप रहता है। यो यत्क्रतुः स तत्कर्म करोति ऐसी श्रुति है। क्रतु का यहां मानस वृत्तिरूप संकल्प अर्थ है। ज्यादा अभ्यास होने पर खाली होठ से होगा मन से नहीं। नहीं होता ऐसी बात नहीं है। वहां भी अति सूक्ष्म मनोवृत्ति रहेगी ही। तब बाह्य जप फल भी मिलेगा। तदर्थ भावना भी करेंगे तो शक्ति आधिक्य ही होगा। एक ही काल में बाह्य जप, मानस जप और अर्थ चिन्तन तीनों संभव है। क्योंकि मन सावयव है। जो नैयायिक सावयव नहीं मानते वे भी मन को अतिवेगवान मानते ही हैं अतः तीनों एक साथ में जैसा संभव है। इस प्रकार यहां बहुत सारे वेदान्तवेत्ता व्याख्या करते हैं।

ॐ शान्तिः शान्तिः शान्तिः ॥

शान्त्यर्थपाठावसरे त्रिःशान्तिःपठ्यते परम्।
तद्व्याख्यातं पुरा यद्धि त्रितापादिनिवर्तनम् ॥ ५५७ ॥

यश्छन्दसां इत्यादि तैत्तिरीयोपनिषत् के अन्तर्गत है। उपनिषत् पाठ काल में त्रिशान्तिपाठ नहीं होता। शान्त्यर्थ पाठ करते हैं तो त्रिशान्ति पढी जाती है। उसकी व्याख्या पहले आ गयी है। यह पाठ त्रितापादिशमनार्थ है।

इति श्रीकाशिकानन्दयतिना कृतिना कृतम्।
तृतीयं कृष्णयजुषः शान्तिव्याख्यानवार्त्तिकम् ॥ ५५८ ॥



ॐ

ॐ अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव।
ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि।
द्रविणँ सवर्चसम्। सुमेधा अमृतोऽक्षितः
इति त्रिशङ्कोर्वेदानुवचनम्॥

ॐ शान्तिः शान्तिः शान्तिः॥

जपार्थानि यजूंष्येतान्यहं वृक्षस्य रेरिवा।
इत्यादीनि मनःशुद्धिकारीणि जपमात्रतः॥ १॥

अहं वृक्षस्य रेरिवा इत्यादि यजुर्गण जपार्थ है। जपमात्र से मनः शुद्धि होगी।

यद्यप्यर्थपरिज्ञानपूर्वकः पाठ इष्यते।
तथापि नोपास्त्यर्थत्वं श्रुतिलिङ्गाद्यभावतः॥ २॥

यद्यपि जप अर्थज्ञानपूर्वक ही इष्ट है फिर भी उपासनार्थ नहीं है। क्योंकि लिङ्गादि श्रुति नहीं है, विनियोजक लिङ्गादि भी नहीं है।

न चोपास्तिप्रकरणा - दुपास्त्यर्थत्वमिष्यताम्।
ब्रह्मविद्याप्रकरणं महाप्रकरणात्मकम्॥ ३॥

उपासना प्रकरण होने से उपासनाङ्ग क्यों नहीं। क्योंकि यह ब्रह्मविद्या महाप्रकरण है।

शीक्षावल्ली ननूपास्ति-विधिप्रकरणं स्थितम्।
मैवं नाना प्रकरणं यत्रेमानि स्फुटं पृथक्॥ ४॥

यह शीक्षावल्ली उपासना प्रकरण है। नहीं। नाना प्रकरण इसमें हैं।

वल्ल्यामस्यां द्वादशानु-वाकास्तेषु-यथाक्रमम्।
देवतादिप्रार्थनाऽऽद्ये वर्णादेः शिक्षणं ततः॥ ५॥
तृतीये संहितोपास्तिर्जपादिस्तुर्य ओंविधौ।
महोव्याहृतितो ब्रह्मो-पास्तिः पञ्चमषष्ठयोः॥ ६॥
पाङ्क्तोपास्तिः सप्तमे स्यादोंकारोपास्तिरष्टमे।
ऋतसत्यादिकार्यत्वं नवमे दशमस्त्वयम्॥ ७॥
शिष्यादेशोपदेशौ चै-कादशे प्रार्थनान्तिमे।

शिक्षावल्ली में बारह अनुवाक हैं। मित्रवरुणादि प्रार्थना प्रथम में, वर्णस्वरादिशिक्षण द्वितीय में, तृतीय में संहितोपासना, चतुर्थ में ॐकारोपासना में जप होम, पांचवें और छठे में मह व्याहृति में ब्रह्मोपासना, सप्तम में पाङ्क्तब्रह्मोपासना, ॐकार ब्रह्मोपासना आठवें में ऋतसत्यस्वाध्यायप्रवचनादि कर्तव्यता नवम में, दशम यही अहंवृक्षस्य यह जपविधि है। शिष्य के लिये कर्तव्य आदेश उपदेश ग्यारहवे में, बारहवें में मित्रवरुणादि प्रार्थना है।

नैषां परस्पराकाङ्क्षा ब्रह्मविद्यार्थतस्त्विमे।
चित्तशुद्ध्यादये तस्मात्स्वोक्तकामार्थतोऽपि वा॥८॥

इन अनुवाकों में उक्त विषयों का परस्पराकाङ्क्षादि नहीं है। ये ब्रह्मविद्यार्थ चित्तशुद्धि आदि के लिये है। निजोक्त काम्यार्थ भी हो सकता है।

प्रमाणमुभयाकाङ्क्षासत्त्वे प्रकरणं भवेत्।
न त्वेकवल्लीपाठादिमात्रेणेत्यवधीयताम्॥९॥

प्रकरण प्रमाण का लक्षण ही है-उभयाकाङ्क्षा प्रकरणम्। एकाध्याय में पाठमात्र प्रकरण प्रमाण नहीं है। यह मीमांसा में बताया है।

तस्मात्सार्थकपाठेन चित्तशुद्ध्यादिकं फलम्।
सार्थकत्वं च वक्तव्यमन्यनिन्दाश्रुतीक्षणात्॥१०॥

इसलिये अर्थज्ञान सहित पाठ से चित्तशुद्धि आदि इनके जप का फल है। सार्थक कहना आवश्यक है, अन्य की निन्दा है। श्रुति में ही बताया है।

भारहारो ह्ययं स्थाणु-रधीत्यार्थं न वेद यः।
अर्थज्ञः सकलं भद्रमश्नुते नाकमेत्यसौ॥११॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं
न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा॥१२॥

ऐसे अर्थज्ञानरहित की निन्दा आदि की गयी है। वह केवल बोझ

ढोनेवाला है। ठूंठा है जो वेदों को पढता है किन्तु अर्थ नहीं जानता। अर्थज्ञ कल्याण का भागी होता है।

आत्मनः कृतकृत्यत्व-ख्यापनार्थमिदं वचः।
ब्रूतेऽभवं मनुरिति वामदेवो यथाब्रवीत्॥ १३॥

ब्रह्मबोध से अपनी कृतकृत्यता ख्यापित करने के लिये वामदेव के समान यह वचन बोलते हैं।

श्रुतं साक्षात्कृतं ज्ञानं भवेद् दृढतरं ततः।
धन्योऽहमस्मि धन्योऽहमिति श्रुतिषु वीक्षणात्॥ १४॥

श्रवणोत्तर साक्षात्कृत ज्ञान इससे दृढतर होता है। धन्योऽहं धन्योहमित्यादि श्रुतियों में कहा है।

शान्त्यर्थं वास्य पाठः स्याद् वेदानुवचनोक्तितः।
प्रसिद्धं वेदवचन - मन्वैतद्ववचनं सताम्॥ १५॥

अथवा शान्त्यर्थ अहं वृक्षस्य इत्यादि का पठन किया जाता है। इसीलिये इति त्रिशङ्कोर्वेदानुवचनं कहा है। वेदपठन के बाद इसका पठन शान्त्यर्थ प्रसिद्ध है।

ननूपसर्गशान्त्यर्थं, शान्तिः सद्भिः प्रपठ्यते।
जाते तु वेदने कस्मात् पठ्यतां शान्तिकृद्वचः॥ १६॥
वेदो वेदनमित्येवं भाष्यकृद्भिश्च भाषितम्।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते किल॥ १७॥

पू. - वेद का वेदन अर्थ भाष्य में बताया। ज्ञानाग्निः सर्व कर्म को भस्म करेगी तो उपसर्ग क्या होगा?

मैवं श्रुत्वापि कश्चिन्न वेदैनमिति हि स्मृतिः।
आहोपसर्गं विदितेऽप्यर्थे साक्षात्कृतिं प्रति॥ १८॥

उ. - श्रुत्वाप्येनं वेद न चैव कश्चित् यह स्मृति विदित में भी साक्षात्कार विरोधी उपसर्ग बताया।

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
विज्ञानोत्तरमप्येव प्रज्ञाकरणमाह हि॥ १९॥

**अहं वृक्षस्य रेरिवेत्यादिकावर्तनं तु तत्।**
**प्रज्ञाकरणमित्याहुः प्रकृष्टज्ञानकारणम्॥ २०॥**
**तच्चिन्तनं तत्कथन - मन्योन्यं तत्प्रबोधनम्।**
**ब्रह्माभ्यासं विदुः प्राज्ञाः प्रज्ञाकरणमेव तत्॥ २१॥**

विज्ञान के बाद प्रज्ञा करने श्रुति बता रही है। अहं वृक्षस्य इत्यादि प्रज्ञाकरण है। ब्रह्माभ्यास भी तच्चिन्तनादि प्रज्ञा-प्रकृष्ट ज्ञान करना ही है।

**शान्त्यर्थपठने शिष्टैः त्रिः शान्तिः पठ्यतेऽन्ततः।**
**तत्प्रामाण्येन तादर्थ्ये सोऽन्यत्रापि विधीयताम्॥ २२॥**

शान्ति के लिये पढते समय अन्त में तीन बार शान्ति बोलते हैं। इस में शिष्टाचार प्रमाण है। यश्छन्दसां इत्यादि में भी वैसी ही बात है। वेदपाठ में वैसा शिष्टाचार नहीं है। यह देख लिया।

**वृक्षस्येत्यस्य संसार - वृक्षस्येत्यर्थ इष्यताम्।**
**ऊर्ध्वमूलो ह्यवाक्शाख एषोऽश्वत्थ इति श्रुतेः॥ २३॥**

वृक्षस्य का संसार वृक्ष का अर्थ किया जाये। कठोपनिषत् में ऊर्ध्वमूलः, एषोश्वत्थ ऐसा बतांया है।

**तस्य व्याख्या कृता सम्यग् विस्तरेण कठश्रुतौ।**
**संक्षेपेण प्रदर्श्यन्ते कारिकास्तत्र गुम्फिताः॥ २४॥**

उसकी विस्तृत व्याख्या कठ श्रुति में की है। वहां स्वग्रथित कारिकायें संक्षेपतः यहां कहते हैं।

**यस्य मूलं भवेदूर्ध्वं विष्णोर्यत् परमं पदम्।**
**सोऽव्यक्तादिस्थावरान्तो वृक्षो जन्माद्यनर्थभृत्॥ २५॥**

उसका मूल ऊपर है 'तद्विष्णोः परं पदं' वह वैष्णव परम पद है। अव्यक्तादि स्थावरान्त वह वृक्ष जन्ममरणादि फलवाला है।

**प्रतिक्षणान्यथाभावो गन्धर्वनगरोपमः।**
**कदलीस्तम्भनिःसारो नानामतविकल्पितः॥ २६॥**

प्रतिक्षण इसकी शकल बदलती रहती है। कहीं सुंदर कभी कुरूप इत्यादि। गन्धर्वनगर के समान आकर्षणकारी किन्तु निस्तत्त्व है। केले के

खंभे के समान छिलके छिलके हैं। कोई इसे पीपल कहे कोई बरगद और कोई गूलर नानामत विकल्पित है।

**वेदान्तवेद्यसन्मूलोऽविद्याकामादिबीजगः।**
**ज्ञानक्रियाशक्तिरूपाऽपरब्रह्मादिसाङ्कुरः ॥ २७॥**

इसका मूल (ऊर्ध्व) वेदान्त वेद्य सत्तत्त्व है। अविद्या काम कर्म इस का बीज है। ज्ञानशक्ति क्रियाशक्ति प्रधान अपरब्रह्म आदि इसका अङ्कुर है।

**प्राणिलिङ्गोच्छ्रयस्तृष्ण-जलसेकावदर्पितः।**
**शब्दस्पर्शादिविषयप्रवालः शास्त्रधीदलः ॥ २८॥**

लिङ्ग शरीर अंकुरोत्तर स्कन्धादिरूप है। तृष्णारूपी जल से खिला हुआ है। शब्दस्पर्शादि विषय कोंपल है, शास्त्रज्ञान हरे पत्ते हैं।

**यज्ञादिकर्मकुसुमः सुखदुःखरसोर्जितः।**
**स्वर्गादिफलकस्तृष्णा सेकसंरूढमूलकः ॥ २९॥**

विहित एवं निषिद्ध कर्म फूल है। सुख दुःख रस से भरा है। स्वर्ग नरकादि फलवाला है। तृष्णा के सिंचन से जमी हुई जडवाला है।

**सत्यलोकादिनीडश्च दुःखाद्युत्थमहारवः।**
**ब्रह्मात्मबोधसुदृढा - ऽसङ्गशस्त्रच्छिदेलिमः ॥ ३०॥**

सत्यलोकादि उस पर बने घोंसले हैं। दुःखादि रोदन ही पक्षिराव है। ब्रह्मात्मबोधजन्य सुदृढ शस्त्र से काटा जाने योग्य है।

**रेरिवा नामवृक्षस्य हिंसकश्छेदकोऽस्म्यहम्।**
**रिणोतेर्यङ्लुकि द्वित्वे क्वनिप्येष हि रेरिवा ॥ ३१॥**

रेरिवा का अर्थ है हिंसक-छेदक। मैं इस संसार वृक्ष को काटनेवाला होऊं। रि धातु से यङ्लुक् द्वित्व अभ्यास गुण करने पर रेरि होगा। क्वनिप् का वन् रहेगा। दीर्घ नकारलोप से रेरिवा होगा।

**वृश्च्यमानो भवेद्वृक्ष ओव्रश्चू छेदनार्थकः।**
**छेदनद्योतनार्थं च वृक्ष इत्युदितं श्रुतौ ॥ ३२॥**

ओव्रश्चू छेदने धातु से वृक्ष शब्द बनता है। छेदनीय को द्योतित करने के लिये ही श्रुति में अश्वत्थ छोडकर वृक्ष शब्द लिया।

एतद् ब्रह्मवनं चैवेत्यभिधायाथ भारते।
एतच्छित्त्वा च भित्त्वा चेत्याह व्यासो महामुनिः॥ ३३॥

महाभारत में व्यासजी ने संसारवृक्ष को ब्रह्मवन कहा, फिर कहा इसे छित्वा च भित्त्वाच अर्थात् इसे छिन्नभिन्नकार।

यङन्तस्य प्रयोगेण लभ्ये छेदनभेदने।
उच्छेदनं चातिशये सवासननिबर्हणम्॥ ३४॥

रेरिवा यह यङन्त का प्रयोग होने से छेदनभेदन अर्थ हुआ। अतिशय अर्थात् भृश अर्थ लेने पर उच्छेदन अर्थ होगा। वासना सहित समास करना उच्छेदन है।

एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना।
इत्यभ्यधायि व्यासेन ज्ञानोर्ध्वं छेदनादिकम्॥ ३५॥
ज्ञानार्थी प्रकृते त्वेतन्मन्त्रजापी न संशयः।
स कथं सिद्धवत्कृत्य रेरिवेति वदिष्यति॥ ३६॥

पूर्वपक्षः- व्यासजी ने इस संसारवृक्ष का ज्ञानरूपी तलवार से छेदनभेदन बताया। प्रकृत में इस मन्त्र को जपनेवाला ज्ञानार्थी है न कि ज्ञानी। वह अपने आपको रेरिवा-छेत्ताभेत्ता कैसे कहेगा? यह सिद्ध कथन है।

सत्यं भविष्यद्वृत्त्येदमुक्तमित्यवसीयताम्।
योज्यतां वाक्यशेषो वा भवेयमिति संगतिः॥ ३७॥

उत्तरः- बात सत्य है। भविष्यद् वृत्ति से रेरिवा कहा। भवेयं ऐसा वाक्यशेष जोडने पर भी संगति है। मैं वृक्षच्छेदक बनूं ऐसी प्रार्थना है।

रिणोतिश्छान्दसो धातु-स्तं विद्यार्थी कथं वदेत्।
तैत्तिरीयाद्युपनिषत् छन्द एवेति युज्यते॥ ३८॥
लौकिकाध्याहृतिस्तत्र भवेयमिति तत् कथम्।
गम्यमानार्थ एवायं विद्यार्थिवचनत्वतः॥ ३९॥

रि धातु से रेरिवा हुआ। रि धातु छान्दस है। विद्यार्थी कैसे प्रयोग करेगा? विद्यार्थी के लिये यह उपनिषत् कह रही है। उपनिषत् तो छन्द

(वेद) है ही। किन्तु उस में भवेयं यह लौकिकाध्याहार नहीं होगा। विद्यार्थी वचन होने से वह गम्यमान अर्थ है।

**ननु स्वमृतमस्मीति ततोऽस्मीत्यवकृष्यते।**
**इति चेद् भिन्नपुरुषव्यवायान्नानुषज्यते॥४०॥**

वाजिनीव स्वमृतमस्मि से अस्मि का आकर्षण होने से भवेयं वाक्यशेष नहीं होगा। नहीं। 'वाक्यान्नानुषज्यते' ऐसा सूत्र है। कीर्त्तिः पृष्ठं गिरेरिव भवतु ऐसा मध्य में भिन्न पुरुष व्यवधान आता है अतः अनुषङ्ग नहीं हो सकेगा।

**भाष्ये प्रेरयितेत्यर्थो रेरिवेत्यस्य दर्शितः।**
**तौदादिकस्य रियतेर्गत्यर्थस्य त्वयं भवेत्॥४१॥**

भाष्य में रेरिवा का प्रेरयिता अर्थ किया है। गत्यर्थक रि धातु का वह रूप है।

**ननु गत्यर्थकाद्धातोः कौटिल्यार्थे यङो विधिः।**
**तन्नान्तर्भावितण्यर्थो भाष्ये प्रेरयितेत्ययम्॥४२॥**

पू. - गत्यर्थक धातु से यङ् कौटिल्यार्थ में होता है। सही है। यहां अन्तर्भावितण्यर्थार्थ होने से दोष नहीं है।

**अनेकार्थत्वतो वा स्याद्धातूनां प्रेरकार्थता।**
**गत्यर्थकोऽपीरधातुर्यथैव प्रेरणां वदेत्॥४३॥**

धातुओं की अनेकार्थता मान्य होने से रि धातु का प्रेरक अर्थ हो जायेगा। जैसे ईर गतौ याचने च के अनुसार ईर धातु गत्यर्थक होने पर भी उसी से प्रेरक शब्द बना।

**अन्तर्याम्यात्मना तिष्ठन् पृथ्व्यादौ यमयामि तान्।**
**श्रुतावेष त आत्मेति तस्यात्मत्वनिरूपणात्॥४४॥**

मैं कैसे संसार का प्रेरक हूं? श्रुति में बताया है। पृथ्वी आदि में अन्तर्यामी रूप से रहकर मैं सब का नियमन करता हूं। इस बात को कहकर श्रुति ने आगे कहा एष त आत्मा। यही तुम्हारा आत्मा है।

पृथ्व्यबग्न्यन्तरिक्षद्यु - वागादित्यदिगिन्दुषु।
खे तमस्तेजसोस्तिष्ठन् सर्वभूतेषु चान्तरः॥४५॥
प्राणवाङ्नयनश्रोत्र - मनस्त्वग्ज्ञानचेतसि।
अन्तस्तिष्ठन् यमयति सोऽन्तर्यामी श्रुतौ श्रुतः॥४६॥

पृथ्वी आदि कौन कौन? पृथ्वी, जल, तेज, अन्तरिक्ष, द्यौ, वाणी, आदित्य, दिशा, चन्द्र, आकाश, तम, तेज तथा-प्राण, वाक्, चक्षु, श्रोत्र, मन, त्वक्, ज्ञान, चित्त इन सब के अंदर रहकर नियमन करनेवाला अन्तर्यामी बताया है।

नन्वन्तर्याम्यहमिति ज्ञानं यदि तु विद्यते।
जपः किमर्थो? नो विद्याप्राप्त्यै, प्राप्तैव सा यतः॥४७॥

मैं अन्तर्यामी हूं जान लिया तो किस लिये जप है? विद्या तो प्राप्त हो गयी।

मैवमापातबोधस्तु स्वाध्यायाध्ययनाद् भवेत्।
यथा सर्वेऽप्यहं ब्रह्मेत्याहुर्वेदान्तपाठिनः॥४८॥

नहीं। यह तो आपातबोध से भी होगा। जैसे वेदान्त पढनेवाले अहं ब्रह्मास्मि कहते हैं।

न संशयोऽप्रमाधीर्वा तत्र श्रद्दधतां सताम्।
विद्यार्थ्यपि वदेत्तस्मादहं वृक्षस्व रेरिवा॥४९॥

श्रद्धा होने से संशय या अप्रामाण्य बुद्धि नहीं होती। वेदान्त विद्यार्थी भी अहं ब्रह्मास्मि कहते हैं। वैसे अहं वृक्षस्य रेरिवा कह सकते हैं।

अध्येतृप्रातिनिध्येन त्रिशङ्कोर्वचनात्मना।
श्रुतिः सार्थानुसन्धानजपार्था प्रावृतद्धिये॥५०॥

अध्येता का प्रतिनिधित्व करती हुई श्रुति त्रिशङ्कु वचन के रूप में अर्थानुसन्धानपूर्वक जपार्थ तत्त्वज्ञानोद्भावना को लक्ष्य रखकर प्रवृत्त हुई है।

केचित्तु मन्त्रदृगहं-पदार्थ इति मन्वते।
तन्न मन्त्रदृशः पूर्वमर्थाभावप्रसङ्गतः॥५१॥

कुछ लोग मन्त्र द्रष्टा को अहं पदार्थ मानते हैं। वह उचित नहीं है। वैसा हो तो मन्त्र द्रष्टा पुरुष से पूर्व मन्त्र का अर्थ ही नहीं होगा, अर्थज्ञान भी नहीं होगा।

**अनादिनिधनो वेदो न तु मन्त्रदृशस्तथा।**
**स्युराधिकारिका याव-दधिकारं न सर्वदा॥५२॥**

वेद अनादि अनन्त है। मन्त्र द्रष्टा अनादि नहीं अनन्त भी नहीं। आधिकारिक पुरुष अनाद्यनन्त नहीं। 'यावदधिकारमवस्थितिः' सूत्रानुसार अधिकारकालमात्र में वे रहते है।

**न च सर्वज्ञवेदेन भाव्यर्थः प्रोच्यतामिति।**
**द्रष्टारः पृथगेव स्युः कल्पभेदेन भूरिशः॥५३॥**

यह कहें कि वेद सर्वज्ञ है भविष्यद् द्रष्टा को भी बोल सकता है। ठीक है। परंतु कल्पभेद से हजारों द्रष्टा भी तो हुए होंगे। किस द्रष्टा का यहां उल्लेख है यह कैसे मालूम पडे?

**न च मन्वन्तरेषु स्युर्मनवो मनवो हि ते।**
**तथैव मन्त्रद्रष्टारो भवन्तीत्यपि सांप्रतम्॥५४॥**
**नामैक्यान्न पुमैक्यं स्यात् सावर्णिर्भविता मनुः।**
**वैवस्वते यः सुरथो दुर्ज्ञानं सविशेषणम्॥५५॥**

यहां कहें कि अनादिकाल से मन्वन्तर चल रहे हैं मनु ही सदा हुए। वैसे मन्त्र द्रष्टा वसिष्ठादि ऋषि भी अनादिनामा हैं। नहीं। नाम एक होने पर भी व्यक्ति भिन्न भिन्न हैं। जैसे वैवस्वतमन्वन्तर में विवस्वत्पुत्र मनु है। इस समय का सुरथ राजा अगले मन्वन्तर में सावर्णि मनु होंगे। वैवस्वत मनु सावर्णि मनु आदि पृथक् पृथक् हैं।

**कल्पभेदेऽपि जात्यैक्यात्तद्बोध इति चेन्न तत्।**
**न हि ब्रवीति यज्जाति र्वदति व्यक्तिरेव यत्॥५६॥**

कल्पभेद होने पर भी मनुत्व वसिष्ठत्व त्रिशङ्कुत्वादि जाति एक ही है। उसी का अहं पद से बोध होगा। नहीं। जाति बोलती नहीं व्यक्ति ही बोलता है।

**तत्तावच्छेदकेनाव - च्छिन्नेऽस्मत्पदशक्तता।**
**स्वातन्त्र्येणैव वक्तृत्वं तत्रापि च विशेष्यते॥५७॥**

वक्तृतावच्छेदक या उच्चारयितृतावच्छेदक धर्म से अवच्छिन्न में अस्मत्पद (अहं पद) की शक्ति है। उस में भी स्वातन्त्र्येण वक्ता होना चाहिये। वसिष्ठ त्रिशंकु आदि स्वतन्त्र उच्चारयिता नहीं है। अनादि सिद्ध का उच्चारयिता है अन्यथा 'तदात्मानं सृजाम्यहं' बोलनेवाला अवतार लेता है अर्थ निकलेगा। त्रिशंकु का वेद के पीछे अनुवचन है। वसिष्ठादि भी स्वतन्त्र वक्ता नहीं है। तपः स्फुरित वेद के अनुवक्ता है।

**कृष्ण आह स्वतन्त्रः सन् तदात्मानं सृजाम्यहम्।**
**न तदा तत्प्रवक्ताऽन्यः कोऽपि सांप्रतिकोऽर्थभाक्॥५८॥**

श्रीकृष्ण ने तदात्मानं सृजाम्यहं ऐसा स्वातन्त्र्येण कहा वे ही अहं पदार्थ है। न कि आजकल कोई उस वाक्य को कहें तो वही अवतारी हो जायेगा।

**यत्रोच्चारयिता नास्ति स्वतन्त्रः कोऽपि तत्र तु।**
**उच्चारयितृमात्रं स्यादहमर्थस्तदाशयः॥५९॥**

जहां कोई स्वतन्त्र उच्चारयिता नहीं वहां सभी उच्चारयिता अगत्या अहं पदार्थ होगा। यदि उस में वाक्यार्थ आशय हो विद्यमान हो (अशेरत इत्याशयः)।

**वेदाहमेतं पुरुषमित्यादौ न तदाशयः।**
**सर्वो वक्तेति सोंऽशस्तु जपैकार्थमपुम्विदः॥६०॥**
**यद्वा परोक्षरूपार्थमादायैवास्तु सार्थकः।**
**अज्ञानां तु जपार्थत्वं सर्ववेदस्य सम्मतम्॥६१॥**

'वेदाहमेतं पुरुषं महान्तं' इत्यादि में यह मन्त्र बोलनेवालों में जो परम पुरुष को नहीं जानते उसके लिये वह अंश जपार्थ ही होगा। अथवा परोक्ष ज्ञान मात्र को लेकर वेदाहं बोलना संभव होने से वैसा अर्थ माना जा सकता है। अज्ञानियों के लिये तो पूरा ही वेद जपार्थ माना गया है। आजकल प्रायः वेदपाठी अर्थ नहीं जानते फिर भी वेद बोलते हैं तो वह

व्यर्थ नहीं है।

यत्तु मीमांसका अर्थ-बोधमात्रार्थतां जगुः।
वेदाधीतेर्नैव तत्सत् वेदलोपप्रसङ्गतः॥६२॥

मीमांसक कहते हैं-दृष्टफल अर्थज्ञानार्थ ही वेदाध्ययन है। इस मत में आज वेदों का प्रायः लोप ही हो जाता। वेदार्थ जाननेवाले आज दुर्लभ हैं। अर्थज्ञान नहीं हुआ तो वेद पढना व्यर्थ है तो कौन वेद पढता।

ईशावास्यादिकान् मन्त्राञ्जपार्थांस्तेऽभिमेनिरे।
अर्थशून्यत्वतः किन्तु किमर्थं तु जपो वद॥६३॥
अत्यन्तमर्थशून्यांश्च हुंफडादीनमी मनून्।
जपार्थानाहुरेषां च जपः पुण्यफलो ध्रुवम्॥६४॥

वेदान्ताभिमतार्थ मीमांसकों को स्वीकार्य न होने से ईशावास्यादि मन्त्रों को वे केवल जपार्थ मानते हैं, पर जप किसलिये कहो। हुंफट् आदि अत्यन्त अर्थशून्य है। उन्हें भी जपार्थ बताया।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।
इत्याहुर्भट्टपादाश्च तस्मात् पुण्यं फलं ध्रुवम्॥६५॥

मीमांसक शिरोमणि भट्टपाद कहते हैं बिना प्रयोजन मूढ भी प्रवृत्त नहीं होता अतः पाठ का पुण्यफल तो सर्वानुमत है।

न च स्यात्कर्मपौष्कल्यं वीर्यवत्तरतोत वा।
फलोद्भवान्तं तद्वाच्यं तच्च पुण्यमदर्शनात्॥६६॥
अनर्थकेनापि पुण्यं यदा स्वीक्रियते तदा।
सार्थकेनापरद्धं किं येन पुण्यं न जायते॥६७॥

कर्म में पुष्कलता या वीर्यवत्तरता हुंफट् आदि के एवं ईशावास्यादि के जप का फल कहेंगे तो वह फल (स्वर्गादि) प्राप्ति पर्यन्त रहनेवाला मानना होगा। जब अनर्थक हुं फडादि जप का भी पुण्य फल है तो सार्थक मन्त्र जप ने क्या बिगाडा जिससे उससे पुण्य नहीं होता।

न चार्थसत्त्वे तज्ज्ञानमन्यत्र सुकृतं फलम्।
तन्नियामकवैधुर्याद् वेदत्वं हि प्रयोजकम्॥६८॥

यह कहें कि जहां अर्थ है वहां अर्थ ज्ञान फल है, पुण्य नहीं। जहां अर्थ नहीं वहां अगत्या पाठादि का पुण्य फल है। नहीं। इसका कोई नियामक नहीं है। पुण्य में वेदत्व ही प्रयोजक है।

न चार्थहीनवेदत्वं तथास्त्वित्यपि सांप्रतम्।
स्पष्टकारणतायां यद्-अवच्छेदकगौरवम्॥ ६९॥

अर्थहीन वेदत्व पुण्य प्रयोजक कहना भी असांप्रत है, अन्याय है। क्योंकि लघु धर्म वेदत्व कारणतावच्छेदक संभव है तो अर्थहीन वेदत्व कारणतावच्छेदक संभव नहीं है।

लघौ धर्मे संभवति नावच्छेदकता गुरौ।
इत्याहुस्तर्ककुशलाः खलु नैयायिका अपि॥७०॥

संभवति लघौ धर्मे गुरोर्नावच्छेदकता ऐसा नैयायिक भी मानते हैं।

कम्बुग्रीवादिमान्नास्ती-त्यभावप्रत्ययोद्भवात्।
स्यादवच्छेदको धर्मो मान्यो गुरुरपीति चेत्॥७१॥
प्रतीयेत तथा लोके - र्घटत्वाद्यनुपस्थितौ।
उपस्थितौ घटत्वं हि स्यादवच्छेदकं स्फुटम्॥७२॥

दीधितिकारने कम्बुग्रीवादिमान्नास्ति प्रतीति के अनुसार गुरुधर्म को भी अवच्छेदक माना। किन्तु घटत्वानुपस्थिति में ही उसमें अवच्छेदकत्व प्रत्यय है। कम्बुग्रीवादिमद्घटत्व अवच्छेदक नहीं ही होगा।

निरर्थकेन पुण्यं चेद् वेदेनोत्पद्यते तदा।
सार्थकेतापराद्धं किं न पुण्यं येन भण्यताम्॥७३॥

निरर्थक वेद के जप से पुण्य होगा तो सार्थक वेदने क्या अपराध किया बोलो।

दृष्टे फले संभवति नादृष्टफलकल्पना।
इति न्यायस्तु भिक्षान्न - प्रभृतावेव युज्यते॥७४॥

संभवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वादित्यादि न्यायकथन भिक्षान्नादि में ही लागू हो सकता है। 'भिक्षां चरेद् यतिः' यह विधि पुण्यार्थ नहीं है। भूख मिटाना दृष्ट फल। जंगली फल खाकर भी

यति रह सकता है। भूख न हो तो भी भिक्षा लाकर सडायें क्यों? कृष्यादि व्यावृत्ति उससे हो सकती है।

## कीर्त्तिः पृष्ठं गिरेरिव

संसारच्छेदनं तावदन्तर्यामित्वमेव वा।
ज्ञानोत्कर्षाद् भवत् प्रोक्तमहं वृक्षस्य रेरिवा॥७५॥
विज्ञानसाधनोपास्ति - संभवामानुषङ्गिकीम्।
कीर्त्तिमाहाधुना मन्त्रः कीर्त्तिः पृष्ठं गिरेरिव॥७६॥

ज्ञानोत्कर्ष से होनेवाले संसार छेदन या अन्तर्यामित्व अहं वृक्षस्य रेरिवा से कहा। अब विज्ञान साधन उपासना से होनेवाली कीर्त्ति को कहते हैं-कीर्त्तिः पृष्ठं गिरेरिव।

गिरेः पृष्ठमिवात्युच्चैर्व्याप्ता कीर्त्तिरुपास्तिभिः।
जानश्रुतेर्यथा सैषा व्याप्यावर्तत रोदसी॥७७॥

जैसे पर्वत का ऊंचा भाग शिखरादि अत्यन्त ऊंचा एवं विशाल होता है वैसे उन्नत विशाल कीर्त्ति हमारी हो। जैसे जानश्रुति की कीर्त्ति आकाश एवं अन्तरीक्ष में व्यास होकर रही।

पश्चाद् भागो भवेत्पृष्ठं कथमत्युन्नतं तु तत्।
पश्य गोवाजिहस्त्यादेः पृष्ठं पृथुलमुन्नतम्॥७८॥

पीठ तो पिछले हिस्से को बोलते हैं वह उन्नत विशाल कैसी। देखो गाय, घोडा, हाथी आदि की पीठ उन्नत एवं विशाल है कि नहीं?

तदुक्तं यो हि वेदैवमन्नमन्ने प्रतिष्ठितम्।
अन्नान्नादस्वरूपेण स एष प्रतितिष्ठति॥७९॥
प्रजापश्वादिभिर्ब्रह्म - वर्चसेनाप्युपासकः।
महान् भवति कीर्त्या तु विशेषेण महानिति॥८०॥

श्रुति में बताया है-जो अन्न में अन्न प्रतिष्ठित समझता है-उपासना करता है वह अन्न एवं अन्नादरूप से प्रतिष्ठित होता है (जैसे नौकर सेवक और स्वामी परस्पर अन्न भी है अन्नाद भी है (भोजन वेतनादि से सुख

पहुंचाता है अतः मालिक अन्न हुआ। सेवा से मालिक को सुख मिलता है अतः वह अन्नाद इत्यादि) प्रजा पशु एवं ब्रह्मवर्चस से उपासक महान होता है। विशेषरूप से कीर्त्ति से महान होता है।

व्यजानाद् भृगुरानन्दो ब्रह्मेत्युक्त्वा जगाद च।
भार्गवी वारुणी विद्या परे व्योम्नि प्रतिष्ठिता॥ ८१॥
यश्चान्योऽप्येव वेदासौ ब्रह्मणि प्रतितिष्ठति।
अन्नवानपि चान्नादो महान् पश्वादिभिस्तथा।
कीर्त्त्या चैव विशेषेण महान् भवति पूरुषः॥ ८२॥
दृष्टं फलमिदं प्राह भाष्यकारो विजानतः।
अन्नान्नादात्मविदुषो दृष्टं वाऽदृष्टमेव वा॥ ८३॥

आनन्दवल्ली में आनन्दो ब्रह्मेति व्यजानात् कहकर उसे परमव्योम ब्रह्म में प्रतिष्ठित भी बताकर आगे कहा जो दूसरा भी उसे जाने वह ब्रह्म में प्रतिष्ठित होता है। ब्रह्मस्वरूप होता है। वह अन्नवान् होगा अन्नाद होगा। प्रजा, पशु एवं ब्रह्मवर्चस से महान होगा। विशेषतया कीर्त्ति से महान् होगा। भाष्यकार ने ज्ञानी के लिये इस फल को दृष्ट बताया। अन्नान्नादोपासक दृष्ट या अदृष्ट दोनों सभव है।

द्युलोकेन समं ज्योतिरुपास्त्यादिवितायिनः।
जानश्रुतेरभूदुच्चैर्दुर्लङ्घ्यं हंसगामिनाम्॥ ८४॥
कीर्त्तिश्च पर्वताकारा ज्योतीरूपा क्रमेद्दिवम्।
कीर्त्तिः स्वर्गफलामाहुरित्येवं स्मृतिदर्शनात्॥ ८५॥

उपासनावालों एवं विज्ञानवालों की द्युलोक के समान ज्योति (तेज) होती है। जानश्रुति का तेज हंसों के लिये दुर्लङ्घ्य था। पर्वताकार विशाल कीर्त्ति भी स्वर्ग पर आरूढ करानेवाली है। ज्योतिस्वरूप है। इसलिये स्मृतियों में भी बताया है कि कीर्त्ति स्वर्गफलदायिनी होती है।

कृत संशब्दनेधातोः कीर्त्तिः कीर्त्त्यत इत्यतः।
कथं कीर्त्त्या सुखं स्वर्गे श्रूयमाणा सुखप्रदा॥ ८६॥

'कृत संशब्दने' धातु से कीर्ति शब्द होता है। सम्यक् कथन संशब्दन

है। कीर्त्यत इति कीर्त्तिः। कीर्त्ति से स्वर्ग सुख कैसे? श्रवण से ही वह सुखप्रद है।

उच्यते देवभावे स्याद् दिव्यश्रोत्रादि नाकिनाम्।
भुवि कीर्त्तयतां देवाः शृण्वन्ति सुखदं वचः॥८७॥
रहो निलीय तिष्ठन् यः स्वप्रशंसां परेरिताम्।
श्रुत्वाऽऽह्लादमवाप्नोतीत्येतत्सर्वानुभूतिगम् ॥८८॥

सुनो। स्वर्ग में देवभाव प्राप्त हुआ पुण्यात्मा को दिव्य श्रोत्रादि प्राप्त होते हैं। भूतल में उनका कीर्त्तिगायन होता है वे आनन्दित होते हैं। वहीं अपना अनुभव देख लो। अंदर कोई चुप बैठा है। बाहर कुछ लोग उसकी प्रशंसा श्रेष्ठ कर्मकलाप की स्तुति करें तो वह कितना प्रसन्न होता है।

नन्वद्यत्वे धूर्तधियः मिथ्यादम्भाद्युपायतः।
ख्यातिं लभेरंस्तेषां च किं नु स्वर्गसुखं भवेत्॥८९॥
मैवं दुष्कर्मभिर्यान्ति प्रथमं नरकं जनाः।
श्रुत्वा मिथ्यायशः स्वैनः स्मृत्वा स्युरतिदुःखिनः॥९०॥

आजकल कई धूर्त पापकर्म मिथ्यादम्भादि से ख्याति पाते हैं। क्या वे भी स्वर्ग सुख पायेंगे? नहीं। प्रथम दुष्कर्म से वे स्वर्ग में ही पहुंचेंगे नहीं। पापकर्म से नरक जायेंगे। वहां अपनी कीर्त्तिश्रवण उसका मूल वंचनादि का स्मरणकर बल्कि अधिक दुःखी होंगे।

पापात्मनां जना लोके स्पष्टं निन्दन्ति दुष्कृतम्।
महद्दुःखं भवेत्तेन यशः संपादयेद् बुधः॥९१॥
अत्रापि लोके स्वां निन्दां श्रुत्वा दुःखी भवेन्नरः।
अन्तर्ज्वलति दावग्नौ प्रतिकर्तुमशक्नुवन्॥९२॥
परलोकगतश्चैव प्रतिकर्तुमशक्नुवन्।
अन्तर्दग्धः कृच्छ्रमियात् सत्कीर्त्तिं प्राप्नुयात्ततः॥९३॥

पापियों की यहां भी निन्दा होती है तो दुःखी होना पडता है। अतः यश संपादन करो। जैसे यहां निन्दा सुनने से अन्तर्दाह होता है प्रतिकार न कर पायें तो अति दुःख होता है वैसे परत्र भी है।

तस्मादुत्तिष्ठ हे पार्थ लभस्व च यशः परम्।
इत्याह भगवान् पार्थं यशःप्रेप्सां प्रवर्धयन्॥ ९४॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व इस प्रकार यश की इच्छा बढाते हुए भगवान भी कह रहे है।

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्॥ ९५॥
ततः स्वधर्मं कीर्त्तिं च हित्वा पापमवाप्स्यसि।
अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्॥ ९६॥
संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते।
इत्याद्यैरपकीर्त्तेश्च निर्मोक्तुं भगवान् जगौ॥ ९७॥

इन गीतावचनों में भगवान ने अपकीर्त्ति से बचने की जोरदार वकालत की।

अत्रापि साधनामार्गस्थितश्चेत् प्रार्थना त्वियम्।
सत्कर्मकर्तुर्भवतु कीर्त्तिः पृष्ठं गिरेरिव॥ ९८॥
भार्गव्यामपि विद्यायां पठनाज्ज्ञानिनामपि।
कीर्त्तिप्रेप्सा न दोषायेत्येतच्च व्यज्यते सताम्॥ ९९॥
न च प्रजान्नपश्वादिप्रेप्साप्येवं भवेदिति।
गृहस्थोऽपि भवेज्ज्ञानी तदीप्सा तस्य युज्यताम्॥ १००॥
पूर्णसाक्षात्कृतौ सर्वद्वैतमिथ्यात्वदर्शनात्।
न कस्यचिदभीप्सा स्यात् परमार्थोऽयमेव हि॥ १०१॥

इस वाक्य में भी यदि साधक हो तो मेरी कीर्त्ति हो यह प्रार्थना होगी। भार्गवी ब्रह्मविद्या प्रकरण में पठित होने से ज्ञानी भी यदि कीर्त्ति की इच्छा रखता हो तो वह भारी दोष नहीं होगा। तब वहीं अन्नवानन्नादो भवति इत्यादि कहने से अन्न पशु प्रजादि की इच्छा अदोष होगी? हो। गृहस्थ भी तो ज्ञानी होता है। हां तत्त्वसाक्षात्कार के बाद सर्वद्वैतमिथ्यात्वदर्शन होने से कोई इच्छा नहीं होगी यही परमार्थ है।

स्थितस्य कथनं चैतद् विस्मयाद् ज्ञानिनो भवेत्।
यथैव साम परमं गायन्नास्ते कृतार्थधीः॥१०२॥

ज्ञानी का यह वस्तुस्थितिकथन विस्मयात्मक हो सकता है। जैसे हा३वु हा३वु हाऊ अहमन्न महमन्न महमन्नं इत्यादि। यहां पर विस्मय से यह कथन होगा मैं संसारवृक्ष का अन्तर्यामी हूं। देखो मेरी कीर्त्ति पर्वतपृष्ठ के समान फैली हुई दिख रही है। इत्यादि।

अत्र पक्षे रेरिवास्मि कीर्त्तिरस्ति ममेति च।
यथायोग्यं वाक्यशेषो भावेदग्रेऽपि तत्तथा॥१०३॥

साधक या ज्ञानी यथायोग्य वाक्यशेष कर लेगा। जैसे रेरिवास्मि ममकीर्त्तिरस्ति इत्यादि ऐसे आगे भी समझना चाहिये।

## ऊर्ध्वपवित्रः

ऊर्ध्वः पवित्रो यस्योर्ध्वं पवित्रं वा समस्यते।
तथाऽस्म्यूर्ध्वपवित्रोऽहं भूयासं वा तथाविधः॥१०४॥

ऊर्ध्वश्चासौ पवित्रश्चोर्ध्वपवित्रः ऐसा कर्मधारय या ऊर्ध्वं पवित्रं यस्यासौ ऐसी बहुव्रीहि है। ऐसा ऊर्ध्व पवित्र मैं हूं यह सिद्धवचन होगा, वैसा ऊर्ध्व पवित्र मैं हो जाऊं यह साधक वचन होगा।

कालतोऽप्यतिसूक्ष्मत्वात्कारणत्वान्महत्त्वतः।
ब्रह्म नित्यत्वतश्चोर्ध्वं मायाशक्तिमदीरितम्॥१०५॥

काल से भी अति सूक्ष्म होने से, कारण होने से, महान् होने से और नित्य होने से मायाशक्तिवाला ब्रह्म ऊर्ध्व है (ऊर्ध्वमूल में भाष्य)।

कालतोऽप्यस्य सूक्ष्मत्वं कालहेतुत्वतो मतम्।
कारणं कार्यतः सूक्ष्ममिति न्यायविदो विदुः॥१०६॥

काल से सूक्ष्म कैसे? इसलिये कि वह काल का भी हेतु है। कारण कार्य से सूक्ष्म हुआ करता है ऐसा न्यायवेत्ता कहते हैं।

ब्रह्मतः काल उत्पन्नः कालहेतुरतो मतः।
कालकालपरं प्राहुर्भवं तेन महर्षयः॥१०७॥

**यस्तु कालं कवलयेत् यस्मिन कालो विलीयते।**
**स एव स्यादुपादानः स एवैनं समुत्सृजेत्॥ १०८॥**

ब्रह्म से काल उत्पन्न हुआ। अतः ब्रह्म कालहेतु हुआ। इसलिये शंकर को महर्षि लोग कालकाल कहते हैं। जो काल को कवलित करे अर्थात् जिस में काल विलीन हो वही उपादान होगा। उपादीयते स्वस्मिन्नित्युपादानं, उसी से फिर उत्सर्जन—सर्जन सृष्टि भी होगी।

**ननु हेतुः कार्यपूर्ववर्तित्वाद् ब्रह्मणो भवेत्।**
**पूर्वत्वं पूर्वकालोऽतोनवस्थाऽऽत्माश्रयोपि च॥ १०९॥**

पूर्व पक्षः- कार्य-पूर्ववर्ती को कारण कहते हैं। पूर्व का पूर्व काल अर्थ है। तब काल से पूर्व काल रहा अतः अनवस्था या आत्माश्रय होगा।

**कालं कर्म स्वभावश्च मायेशो मायया स्वया।**
**आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे॥ ११०॥**
**इति भागवतोक्तेश्च यदृच्छाप्राप्तमेव हि।**
**कालादिकमुपादत्ते न तं जनयति प्रभुः॥ १११॥**

भागवत में भी काल कर्म एवं स्वभाव को यदृच्छाप्राप्त बताया है उत्पन्न नहीं।

**कालाद् गुणव्यतिकरः परिणामः स्वभावतः।**
**कर्मणो जन्म महतः पुरुबाधिष्ठितादभूत्॥ ११२॥**
**गुणव्यतिकरो नाम ह्युद्भवाभिभवात्मकः।**
**तत्त्वान्तरं जनयतः परिणाम उदाहृतः॥ ११३॥**
**परिणामाद् भवेज्जन्म प्रादुर्भावसमाह्वयः।**
**प्रादुर्भवेन्महत्तत्त्वं गुणानां परिणामतः॥ ११४॥**

भागवत में आगे बताया-काल से गुणव्यतिकर होता है। स्वभाव से परिणाम होता है। कर्म से जन्म होता है। गुणव्यतिकर माने सत्त्वरजस्तम का उद्भव-अभिभव। उससे गुणों में परिणाम होने लगता है जिससे महत्तत्त्व का जन्म होता है। जन्म का अर्थ है प्रादुर्भाव।

**अत्रोच्यते नैव किंचिद् भवेत्कार्यं यदृच्छया।**
**यदृच्छा तेन मायैव कालादि प्राप्तिरप्यतः॥ ११५॥**

इस पर हम यही कहेंगे कि यदृच्छा से कोई कार्य नहीं होता। अतः यदृच्छा माया ही है। अन्यथा यदृच्छया परमाणु में सुमेरु उत्पन्न होगा। नरशृंग उत्पन्न होगा।

**अज्ञातकारणार्थे हि यदृच्छाशब्द इष्यते।**
**न तु कारणहीनेऽर्थे स्वामिनामपि तन्मतम्॥ ११६॥**
**यदृच्छया मत्कथादावित्यत्र व्याचचरिख्यरे।**
**भाग्योदयेन केनापीत्यर्थं श्रीस्वामिनः खलु॥ ११७॥**

अज्ञात कारण अर्थ में यदृच्छा शब्द का प्रयोग माना जाता है। न कि कारणरहित अर्थ में। यह श्री श्रीधर स्वामी को भी अभिमत है। यदृच्छया मत्कथादौ जातश्राद्धस्तु इस श्लोक की व्याख्या में स्वामी वचन है- भाग्योदयेन केनापि। केनापि से अज्ञातत्वकथन है। भाग्योदय का अर्थ है शुभकर्मफलाभिमुख्य।

**अज्ञातं तर्हि कालस्य कारणं किं तदुच्यते।**
**ब्रह्मैव संजगेऽज्ञातं कारणं तत्त्ववेदिभिः॥ ११८॥**

यदृच्छा शब्द से प्राप्त अज्ञात कारण काल का क्या है? अज्ञात ब्रह्म।

**नन्वेवमपि पूर्वत्वं पूर्वकालभवं भवेत्।**
**तन्नानिर्वाच्यमेवेदं माययेति विशेषणात्॥ ११९॥**

भले अज्ञात कारण हो। पर कार्यपूर्ववर्ती होगा। पूर्वत्व पूर्वकाल ही है। पूर्वकाल के बिना कारण बनेगा। 'मायया' ऐसा विशेषण इसलिये दिया। वह अनिवर्चनीय है।

**यथा स्वप्ने घटीमात्रं वर्षपूगो विलोक्यते।**
**तन्निर्माति स्वयं तद्व-न्निर्माति ब्रह्म जाग्रति॥ १२०॥**

जैसे स्वप्न में एक घडी में सैंकडों वर्ष दिखते हैं उनके निर्माता स्वयं हम हैं वैसे जाग्रत में काल निर्माता ब्रह्म है।

ये मन्यन्ते महाकालं स्वप्ने सोऽपि प्रणीयते।
अनादेः कथमुत्पत्तिरिति तत्रापि तर्क्यते॥ १२१ ॥

जो महाकाल को मानते हैं सपने में उसको भी उत्पन्न करते हैं। और अनादिकाल की कैसे उत्पत्ति हो सकती है ऐसा तर्क भी सपने में करते हैं।

स्वप्ने चेत् कल्पनामात्रं समानं तच्च जाग्रति।
जाग्रत्यपि हि कालोऽयं कल्पितो मायया यतः॥ १२२॥

स्वप्न में काल की कल्पनामात्र है तो जाग्रत में भी वह माया कल्पित है।

उत्पन्नश्चैत्रमासोऽद्य वैशाखे स लयं गतः।
इति प्रतीतेरुत्पत्ति-नाशौ कालस्य सिध्यतः॥ १२३ ॥

चैत्र मास उत्पन्न हुआ। आज वैशाख में वह समाप्त हुआ। इस प्रतीति के अनुसार काल की उत्पत्ति और लय सिद्ध होते हैं।

ननु स्तां खण्डकालस्य सूर्येन्दुस्पन्दरूपिणः।
उत्पत्तिप्रलयौ किन्तु महाकालस्य नैव तौ॥ १२४॥
मैवं नित्यो महकालौ व्यर्थत्वान्नोपगम्यते।
मासवर्षादिवत् स्पन्दसन्तत्यैवोपपत्तितः।
नित्यास्तु देनतास्तायां शाश्वतीभ्य इतिश्रुते॥ १२५ ॥

पू. - खण्ड काल में उत्पत्ति और प्रलय हो। पर महाकाल में नही। उ. - महाकाल व्यर्थ है। मास वर्षादि के समान सूर्यादिस्पन्द सन्तान से ही उपपत्ति है। हां इनके देवता शाश्वतीभ्यः श्रुति में नित्य हैं।

पूर्वत्वमुत्तरत्वं वा कार्यकारणभावगम्।
न विद्यते महाकाले तेनान्तर्गडुना हि किम्॥ १२६ ॥

कार्यत्व वा कारणत्व में पूर्वत्व एवं उत्तरत्व घटक है। यहां काल में न वह है और न उसका वह प्रयोजक हो सकता है।

स्वध्वंसाश्रयकालत्वं स्वोत्तरत्वं निगद्यते।
स्वप्रागभावकालत्वं स्वपूर्वत्वं च भण्यते॥ १२७॥

अपना नाशकाल ही अपना उत्तरकाल है। अपना प्रागभाव काल ही

अपना पूर्वकाल है। महाकाल का ध्वंस या प्रागभाव कहां होता है?

**ध्वंसो वा प्रागभावो वा स्पन्दानामेव युज्यते।**
**महाकालस्तत्प्रयोक्ता कुतो नामेश्वरोऽस्तु सः॥१२८॥**

ध्वंस या प्रागभाव स्पन्दात्मक काल का ही हो सकता है। यह कहें कि महाकाल उसका प्रयोजक है तो क्यों? ईश्वर को ही प्रयोजक क्यों नहीं मानते?

**दिक्कालावीश्वरान्नातिरिच्येते इति संजगुः।**
**नव्यानैयायिकास्तत्र नानायुक्तीश्च ते जगुः॥१२९॥**

दीधितिकारादि नव्य नैयायिक भी कहते हैं कि दिक्कालावीश्वरान्नातिरिच्येते। कालिक सम्बन्ध का प्रयोजक महाकाल क्यो? ईश्वर क्यों नहीं?

**महकालं जगुः शम्भुमुज्जयिन्यां स पूज्यते।**
**पुराणादौ महाकाली महाकालश्च वर्णितौ॥१३०॥**

उज्जैन में महाकाल भगवान की पूजा होती है। पुराण एवं तन्त्रों में महाकाली एवं महाकाल वर्णित हैं। महाकाली महाकाल की ही शक्ति है।

**कलनात्कालमाहुस्तं शर्वो विशरणादपि।**
**कलितं कालयन्ती च तच्छक्तिः कालिका परा॥१३१॥**

कल गतौ संख्याने च धातु से काल शब्द है। गमितं का उत्पादित भी पदगतौ अर्थ है। जगत को उत्पादित कर फिर जो कवलन करे वह शिव की शक्ति काली है।

**अपि चाद्वैतसिद्धान्ते न द्वितीयमकल्पितम्।**
**कल्पितं कल्पनोद्भूतं न ततः काचन क्षतिः॥१३२॥**

अद्वैत मत में अकल्पित द्वितीय है ही नहीं। कल्पित माने कल्पना से उद्भूत।

**षडनादिमतेऽप्येव न कालः सप्तमस्तथा।**
**आकाशस्य यथोत्पत्तिः कालस्यापि भवेत्तथा॥१३३॥**

वेदान्त में छः अनादि माने हैं। सप्तम अनादि काल नहीं माना। जैसे

आकाश की उत्पत्ति वैसे काल की भी उत्पत्ति मान सकते हैं।

**कालकर्तृत्वतः काला-ऽधिष्ठानत्वत एव वा।**
**कालतः सूक्ष्म एवासा-वात्मेत्यूर्ध्वोऽभिलप्यते ॥ १३४ ॥**

काल का उत्पादक कर्ता हो चाहे काल का अधिष्ठानरूप हो, सर्वथा काल से सूक्ष्म होने से परमात्मा ऊर्ध्व कहलाता है।

**जगतः कारणत्वाच्च तदूर्ध्वमुपरिस्थितेः।**
**कार्यसत्तामुपादानसत्ता खल्वतिवर्तते ॥ १३५ ॥**

काल से सूक्ष्म यह एक विशेष कथन है। सामान्यतः वह सर्व जगत का कारण है इसलिये ब्रह्म ऊर्ध्व है। क्योंकि कार्य सत्ता की अपेक्षा उपादान सत्ता की महत्ता अधिक है।

**उपादानं विना नैव कार्यं क्वाप्यवतिष्ठते।**
**मृदं विना नहि घटो घटेन तु विनाऽस्ति मृत् ॥ १३६ ॥**

उपादान के बिना कार्य नहीं रहता। मिट्टी न हो तो घट नहीं रहेगा। घट के बिना मिट्टी रहेगी।

**नित्यत्वाच्च भवेदूर्ध्वं ब्रह्म सर्वास्पदं परम्।**
**लीयन्तेऽबादिषु क्ष्माद्या ब्रह्म नो लीयते क्वचित् ॥ १३७ ॥**

ब्रह्म नित्य होने से भी ऊर्ध्व है। पृथिवी आदि प्रलय में जलादि में लीन होते हैं। ब्रह्म कहीं भी लीन नहीं होता। अतः वह नित्य है।

**ननु मायाशक्तियुक्तं ब्रह्मोर्ध्वमुदितं पुरा।**
**भूयश्चान्ते विश्वमायानिवृत्तेः कथमूर्ध्वता ॥ १३८ ॥**

पू. - पहले कहा मायाशक्तियुक्त ब्रह्म ऊर्ध्व है। श्रुति में बताया है अन्त में माया की भी निवृत्ति होती है तो मायाविशिष्ट ब्रह्म भी नहीं रहेगा। तब ब्रह्म ऊर्ध्व कैसे?

**अत्राचार्यास्तु संक्षेपशारीरककृतो जगुः।**
**नोपादानं मतं माया केवलं द्वारकारणम् ॥ १३९ ॥**

उ. - इस पर संक्षेपशारीरकाचार्य का कहना है कि माया उपादान कारण नहीं है। वह केवल द्वारकारण है।

**दीपवान् पश्यति निशि दीपोऽत्र द्वारकारणम्।**
**विश्वं सृजति मायावी माया च द्वारकारणम्॥१४०॥**

दीपकवाला रात को देखता है तो दीपक द्वारकारण है। वैसे मायावाला जगत् बनाता है तो माया भी द्वारकारण है। मायाशक्तिमत् इस भाष्य का इतना ही अर्थ है। न कि मायाविशिष्ट शबल ब्रह्म।

**न चैवं कारणत्वेन ब्रह्म स्यात्परिणामवत्।**
**विवर्तकारणत्वेन परिणामाऽप्रसङ्गतः॥१४१॥**

ब्रह्म ही कारण है तो परिणामी होगा। नहीं। ब्रह्म विवर्त कारण है।

**ऊर्ध्वं ब्रह्म महत्त्वाच्च महत्त्वं व्यापकत्वतः।**
**पादोऽस्य विश्वाभूतानीत्याह व्यापकतां श्रुतिः॥१४२॥**

महत्त्व होने से भी ब्रह्म ऊर्ध्व है। महत्त्व माने व्यापकत्व। श्रुति में बताया है-पादोऽस्य विश्वाभूतानि। ब्रह्म के एक पाद में समस्त विश्व समाया हुआ है।

**रागद्वेषादिकालुष्य-संयुतं स्यादपावनम्।**
**रागादिभवदोषेण रहितं स्याच्च पावनम्॥१४३॥**

रागादि दोष सहित अपवित्र है। रागादि दोषरहित होने से आत्मा पवित्र है।

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते॥१४४॥**
**शुद्धं चापापविद्धं च श्रुतिरप्याह तत्परम्।**
**तस्मादूर्ध्वपवित्रोऽहमित्याहात्मानमागमः॥१४५॥**

जैसे सूक्ष्म होने से आकाश धूलि आदि से लिप्त नहीं होता वैसे समस्त देहों में रहता हुआ भी आत्मा देह दोष से लिपायमान नहीं होता (गीता); शुद्धमपापविद्धम् (श्रुति) अतः यहां आत्मा को ऊर्ध्वपवित्र बताया।

**पवित्राणां पवित्रं य इत्यत्राह स्म भाष्यकृत्।**
**पवित्रं पाप्मनः सर्वानुन्मूलयति तेन तत्॥१४६॥**

पुण्यपापात्मकं कर्म तद्धेत्वज्ञानमेव च।
यद् बन्धनं नाशयेत् स्व-याथात्म्यज्ञानतोऽथवा॥ १४७॥

पवित्राणां पवित्रं य इस विष्णुसहस्रनाम के श्लोक में भाष्यकार ने व्याख्या की है-समस्त पापों का उन्मूलन करने से परमात्मा परम पवित्र है। अथवा पुण्य पापात्मक कर्म एवं उसका हेतु अज्ञान को जो संसार बन्धनकारी है अपने यथार्थ ज्ञान से नष्ट करे वह पवित्र कहलाता है।

परमं यो महत्तेज इत्यतोऽत्रानुवर्तते।
परमं तेन परमपवित्रार्थोऽपि लभ्यते॥ १४८॥
वस्तूनां पावनं नाम भवेदशुचिनाशनम्।
पापादिकमशुच्येवेत्युक्तार्थो लभ्यतेऽञ्जसा॥ १४९॥

परमं यो महत्तेजः इत्यादि पूर्व श्लोक से परम की अनुवृत्ति होने से पवित्राणां मध्ये परमपवित्रं ऐसा अर्थ आयेगा। पवित्र करता है का अर्थ है अशुचि को साफ करता है, नष्ट करता है। पापादि ही अशुचि है।

शक्यं च नित्यो नित्यानां चेतनानां च चेतनः।
इतिवच्च पवित्राणां पवित्रमिति वेदितुम्॥ १५०॥
सत्यानां सत्यता तस्य ज्ञातॄणां ज्ञानमेव च।
आनन्दतां तथानन्द ईशस्यैवेति योजनात्॥ १५१॥

नित्यो नित्यानां इत्यादि के समान भी पवित्राणां पवित्रं की भी व्याख्या से नित्य माने सत्य या सत्। उन में सत्यता या सत्ता ज्ञाताओं में ज्ञान आनन्दभोगियों में आनन्द ब्रह्म का ही है ऐसी वहां व्याख्या है।

पवित्रं परमं ज्ञान-प्रकाश्यं ब्रह्म यस्य मे।
सर्वात्मनः सोऽह-मूर्ध्वपवित्र इति भाषितम्॥ १५२॥

यहां भाष्य में ज्ञानप्रकाश्य परम पवित्र ब्रह्म जिस मुझ सर्वात्मा का है वह मैं ऊर्ध्वपवित्र हूं ऐसी योजना की है।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
ज्ञानं ज्ञानप्रकाश्यं तदूर्ध्वं ब्रह्म ममास्त्यतः॥ १५३॥

ज्ञान के सदृश कोई अन्य पवित्र नहीं - इस गीता वचन से पवित्र

पद का ज्ञान अर्थ प्राप्त होगा। ज्ञान माने ज्ञानप्रकाश्य या स्वयं प्रकाश ज्ञानस्वरूप ऊर्ध्व ब्रह्म जिस सर्वात्मा मेरा स्वरूप है वह ऊर्ध्वपवित्र ऐसा मैं हूं या होऊं ऐसा यहां अर्थ होगा।

पवित्रयति तस्माच्च पवित्रमिति भण्यते।
ज्ञातं पवित्रयेद् ब्रह्म ज्ञातृन् ज्ञानं च तत्तथा॥१५४॥

पवित्र करनेवाला इस अर्थ में भी पवित्र शब्द है। ज्ञात ब्रह्म पवित्र करता है। ज्ञान भी पवित्र करता है। यथेष्ट व्याख्या कर सकते हैं।

ननु चात्र बहुव्रीहौ पवित्रं चेद्विशेषणम्।
कस्य व्यावर्तकं नित्यपवित्रं ह्यूर्ध्वमिष्यते॥१५५॥

पू. - ऊर्ध्वं पवित्रं यस्य इस प्रकार बहुव्रीहि मानने पर पवित्र विशेषण किसका व्यावर्तक है? क्योंकि ऊर्ध्व ब्रह्म तो नित्य पवित्र है।

उच्यते परमं ब्रह्म सच्चिदानन्दलक्षणम्।
तस्योपाधिर्भवविधौ प्रकृतिस्त्रिगुणात्मिका॥१५६॥

सुनो। परब्रह्म सत् चित् आनन्दरूप है। त्रिगुणात्मक प्रकृति उसकी उपाधि संसारविधि में उपाधि है।

सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्येति सा द्विधा।
व्याप्यव्यापकरूपा च कार्यकारणलक्षणा॥१५७॥
मायोपाधिर्भवेदीशः स पवित्र उदीर्यते।
शुद्धसत्त्वप्रधानैक-मायोपाधित्वहेतुतः ॥१५८॥
रजस्तमःसमाक्रान्ताऽशुद्धाऽविद्या निगद्यते।
तदुपाधित्वतो जीवो ह्यपवित्र इतीर्यते॥१५९॥

सत्त्वगुण की शुद्धि और अशुद्धि को लेकर प्रकृति के माया और अविद्या दो भेद हुए। वे दोनों व्याप्य व्यापक तथा कार्य कारणरूप हैं। मायोपाधि ईश्वर और अविद्योपाधि जीव है। शुद्ध सत्त्वप्रधान माया एक है उस उपाधि से ईश्वर पवित्र है। रजोगुण और तमोगुण से आक्रान्त सत्त्व अविद्या उपाधि होने से जीव अशुद्ध है।

कारणं ननु नाविद्योपाधिरीशो हि कारणम्।
मैवं जीवोऽपि भवति कारणं सृष्टिभेदतः॥ १६०॥
ईक्षणादिप्रवेशान्ता त्वीशसृष्टिरुदीरिता।
जाग्रदादिविमोक्षान्ता जीवसृष्टिश्च सम्मता॥ १६१॥
अहं ममेति कर्मापि मातृपत्नीसुताद्यपि।
जीवसृष्टिरिति प्रोक्ता सर्वं च प्रातिभासिकम्॥ १६२॥

अविद्योपाधि जीव कारण कहां है। ईश्वर ही कारण है। नहीं। सृष्टि-भेद से जीव भी कारण है। तदैक्षत इस ईक्षण से लेकर अनुप्रवेश पर्यन्त ईशसृष्टि है। जाग्रदादि मोक्ष पर्यन्त, अहं, मम, एवं कर्म तथा माता पत्नी सुता इत्यादि तथा रज्जुसर्पादि सभी प्रातिभासिक जीवसृष्टि है।

अपवित्रोर्ध्वरूपोऽहं स्यां पवित्रोर्ध्वलक्षणः।
इत्येवं प्रार्थ्यत इति युक्तमुक्तं विशेषणम्॥ १६३॥

मैं जीव होने से कारणरूप हूं। किन्तु अपवित्र कारणरूप हूं। सो मैं पवित्र कारण बनूं ऐसी यहाँ प्रार्थना है ऊर्ध्वपवित्रो भूयासम्।

नन्वविद्या परिच्छिन्ना नोपाधिः खलु सेशितुः।
कथं कालुष्यहानेन सोऽहं स्यामिति चेच्छृणु॥ १६४॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।
इति श्रुतेरुपाधी तौ कार्यकारणलक्षणौ॥ १६५॥
मायैकदेशताहेतो-रविद्या कार्यमीरिता।
अविद्याया अनादित्वादुत्पत्तिरहितत्वतः॥ १६६॥
किंवान्तःकरणाद्येतत्कार्यवैशिष्ट्यहेतुतः।
कार्यत्वमाहाविद्याया इति सर्वं समञ्जसम्॥ १६७॥
अविद्याया विनाशे तु जीव ईशो भवेदयम्।
कार्यभावपरित्यागात्कारणात्मावतिष्ठते॥ १६८॥
गृहान्तर्वर्तिकलश-विनाशो जायते यदा।
गृहाकाशत्वमेत्येष कलशाकाशशब्दितः॥ १६९॥

पू. - ऊर्ध्वपवित्र ईश्वर हुआ जो मायोपाधिक है। अविद्योपाधिक

जीव ईश्वर कैसे बनेगा? अविद्या परिच्छिन्न है। कलुषता की निवृत्तिमात्र से वह अपरिच्छिन्न नहीं होगी। उ. - सुनो-श्रुति में जीव को कार्योपाधि और ईश्वर को कारणोपाधि बताया है। श्रुति में माया का एकदेश होने से अविद्या को कार्य बताया, न कि सादि होने से। क्योंकि जीव अनादि है। रज और तम का आक्रमण समाप्त होने पर अविद्या माया ही है क्योंकि कार्यभाव समाप्त हो गया। अथवा अन्तःकरणादि कार्यविशिष्ट होने से अविद्या को कार्य बताया। अन्तःकरणादि नष्ट होने पर वह कारणरूप रह जायेगी। अन्तःकरणादि के होने से ही अहंममादि कालुष्य संभव है। जैसे घर में घट रखा है तो गृहाकाश में घटाकाश है। घट नष्ट होता है तो घटाकाश गृहाकाश हो जाता है। वैसे अन्तःकरण नष्ट होने से अन्तःकरणावच्छिन्न चैतन्य मायावच्छिन्न चैतन्य ही हो जायेगा। अतः पवित्र कारणस्वरूप बनूं यह आशा उचित है।

**अत्र प्रकृत्यवच्छिन्नं चैतन्यं किंसमाह्वयम्।**
**किंकार्यं चेति नैवोक्तं विद्यारण्यमुनीश्वरैः॥१७०॥**

प्रकृति उसके दो भेद माया और अविद्या तथा मायाचैतन्य ईश्वर और अविद्याचैतन्य जीव ऐसा विद्यारण्यस्वामी ने वर्णन किया। किन्तु प्रकृतिचैतन्य का क्या नाम है और क्या कार्य है यह नहीं बताया।

**अतश्च प्रकृतिर्माया पर्यायौ सुधियो विदुः।**
**मायां तु प्रकृतिं विद्यादितिश्रुत्यनुरोधतः॥१७१॥**

इसलिये माया प्रकृति ये दो पर्याय मात्र हैं ऐसा अन्य विद्वानों ने माना। मायां तु प्रकृतिं विद्यात्। माया को प्रकृति समझो यह श्रुति उसका समर्थन करती है।

**ऊर्ध्वमुन्नतमत्यन्तं पवित्रोऽस्मीति केचन।**
**ऊर्ध्वं कारणमित्येव भाष्ये त्वर्थो निरूपितः॥१७२॥**
**ऊर्ध्वं तत्कारणं ब्रह्म पवित्रं भवहानतः।**
**यस्य सोऽयमिति त्वत्र व्याख्यातं भाष्यवार्त्तिके॥१७३॥**

ऊर्ध्व=अत्यन्त पवित्र मैं हूं (या होऊँ) ऐसी किसी की व्याख्या है।

भाष्य में ऊर्ध्व का कारण ही अर्थ बताया। वार्त्तिक में बताया-ऊर्ध्व माने कारण ब्रह्म। संसाररहित होने से वह पवित्र है ऐसा स्वरूप जिसका हो वह ऊर्ध्वपवित्र है कहा। शंका होगी, कारणताकाल में भवहान=संसार निवृत्ति कैसे होगी? कारणब्रह्म ही कारणता छोडकर पवित्र परब्रह्म जिसके लिये हो ऐसी व्याख्या करो।

ननु पूर्वं प्रयोज्ये स्तः ससम्यन्त-विशेषणे।
बहुव्रीहाविति मुनेः पाणिनेरस्ति शासनम्॥ १७४॥
सत्यं सर्वे विकल्पन्ते विधयश्छन्दसीत्यतः।
भवेत् परनिपातोऽपि न तस्मात्काचन क्षतिः॥ १७५॥
विशेषणं विशेष्येण बहुलं कर्मधारये।
कर्मधारयपक्षोऽपि बहुलत्वाददूषणः॥ १७६॥

व्याकरणानुसार बहुव्रीहि में विशेषण पवित्र का पूर्व प्रयोग होना चाहिये। किन्तु वेद में सभी विधि विकल्पित होने से दोष नहीं है। कर्मधारय में भी विशेषणं विशेष्येण बहुलं ऐसा बहुल बताया। अतः पूर्व प्रयोग सुगम है।

## वाजिनीव स्वमृतमस्मि

वाजोऽन्ननामसु बल-नामस्वपि च पठ्यते।
वाजमन्नं भवेद्यस्य यज्ञीयं वाज्यसौ रविः॥ १७७॥
पपाठ मेदिनिकरो वाजो निःस्वनपक्षयोः।
वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु॥ १७८॥
यज्ञस्यान्नं तु यज्ञान्नं यज्ञोऽन्नं चेति वा पृथक्।
वाजं सनन् संभजन् हि सूर्यो वाजसनिर्भवेत्॥ १७९॥
तस्य वाजसनेयानि प्राहुः शुक्लयजूंष्यतः।
आदित्यानि हि शुक्लानीत्याहुर्वाजसनेयिनः॥ १८०॥

निघण्टु में अन्ननामों में और बलनामों में वाज पढा है। यज्ञीय अन्न आदित्य को प्राप्त होता है। अतः सूर्य वाजसनि कहलाया। सूर्योपदिष्ट होने

से शुक्ल यजुष को वाजसनेयानि आदित्यानि आदि बृहदारण्यक में कहा।

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।**
**इत्याहाऽऽहुतिसामान्यमादित्यप्राप्तिकं मनुः॥१८१॥**

यज्ञीय अन्न घृतादि अन्य देवों को भी तो प्राप्त होते हैं। जरूर। किन्तु मनुवचन हे अग्नौ प्रास्ताहुतिः - अग्नि में डाली गयी आहुति आदित्य को प्राप्त होती है।

**प्राप्यादित्यं ततो देवाः प्राप्नुवन्त्याहुतीरिति।**
**वाचानयानुमेयं स्यान्मनोरिति च गम्यते॥१८२॥**

क्या अन्य देवता को आहुति नहीं पहुंचती? यदि ऐसा हो तो शास्त्रविरोध होगा। नहीं। प्रथम आदित्य को प्राप्त होकर वहां से अन्य देवों तक पहुंचती है ऐसा इस मनुवचन से अनुमेय है ऐसा अर्थगम्य है।

**सूर्यः सर्वरसाहर्तेत्याहुर्हेतुं तु केचन।**
**तत्राग्निप्राप्तनोक्तेर्हि नैव सार्थक्यमीक्ष्यते॥१८३॥**
**अग्नेः सूर्यस्य चान्योन्य-तेजःसम्बन्धसत्त्वतः।**
**इत्यन्ये तत्र सम्यक्त्वमाहुतित्वं च नार्थवत्॥१८४॥**

सूर्य सर्वरसाहर्ता होने से आहुति का रस सूर्य को प्राप्त होगा। आदित्य से वही रस वृष्टिरूपेण पृथिवी में आयेगा। उससे अन्न एवं प्रजा होगी ऐसी व्याख्या कईयों ने की है। परंतु सब रसों का आहरण करता है तो अग्नि में डालने को क्यों कहा? दूसरे कहते हैं अग्नि और सूर्य का तेजः सम्बन्ध होने से अग्नि में डालने पर ही सूक्ष्म रस का आहरण सूर्य करता है। परंतु यदि यही बात है तो अग्नि में खाली फेंक दो। स्वाहादिमन्त्रान्तपूर्वक सम्यक् आहुति कहने की क्या जरूरत?

**अपूर्वशक्तयो मन्त्रा विधिश्च परिपोषकः।**
**तद्युक्ताहुतयः सूक्ष्माः सूर्यं यान्तीति युज्यते॥१८५॥**

मन्त्रों में अपूर्व शक्ति रहती है। उस शक्ति का परिपोषक विधि है। उन से युक्त आहुतियां सूक्ष्मरूप सूर्य तक पहुंच जाती हैं यही युक्त है।

**कारणं मृत्तिका यस्य तत्कार्यं घट उच्यते।**
**घटोऽपि मृत्तिकः किन्तु नैवास्ते मृत्तिकाद्वयम्॥२०७॥**
**तथैव कारणं पूर्णं कार्यं पूर्णमिदं तथा।**
**इति पूर्णद्वयं नास्ति येनाऽपूर्णं द्वयं भवेत्॥२०८॥**

पूर्णमदः से उपादानात्मक पूर्ण बताया। पूर्णमिदं में उपादेयात्मक कहा। कारण मृत्तिका है। कार्य घट भी मृत्तिका है किन्तु दो मृत्तिका नहीं हैं। वैसे कार्यकारणरूप होने से पूर्णद्वय नहीं, जिस को लेकर दोनों की अपूर्णता की प्रसक्ति हो।

**तदनन्यत्वमारम्भशब्दादिभ्य इति स्वयम्।**
**सूत्रकृत् प्राह कार्याणा-मुपादानादनन्यताम्॥२०९॥**

तदनन्यत्वमारम्भणशब्दादिभ्यः इस प्रकार ब्रह्म सूत्र में भी कार्यकारण की अनन्यता-एकता बतायी है।

**मृद उद्गम्यते कुम्भो नासतः सत्त्वमिष्यते।**
**उद्गतिश्चासतो नैव पूर्णे पूर्णं स्थितं ततः॥२१०॥**

मिट्टी में घट उद्गत होता है। असत् न सत् होता है और न उद्भूत होता है। जो अंदर है वही ऊपर उठेगा। पूर्ण में पूर्ण है वही ऊपर उठता है।

**अत एवोद्भवत्यादिमप्रयुज्य श्रुतिः स्वयम्।**
**उदच्यत इति प्राह पूर्वसत्त्वविवक्षया॥२११॥**

इसीलिये पूर्णात् पूर्णं प्रजायते उद्भवति आदि का प्रयोग न कर उदच्यते का प्रयोग किया। क्योंकि पूर्व अस्तित्व श्रुति को सूचित करना था।

**नृत्यत्युदञ्चितपद इति लोके प्रयुज्यते।**
**पदं पूर्वं स्थितं नीचैः क्रियते समुदञ्चितम्॥२१२॥**

उदञ्चितपाद होकर नृत्य करता है ऐसा व्यवहार करते हैं। तो पहले से नीचे पद है तब तो वह उदञ्चित किया (उठाया) जाता है।

**नन्वस्ति मृदि कुम्भः प्राक् कथं नावेक्षितस्तदा।**
**अस्थौल्याददितिचेत् स्थौल्यं प्रागसत् तदजायत॥२१३॥**

पू. - यदि मृत्तिका में घट पहले से था तो दिखा क्यों नहीं? यदि कहो स्थूलता नहीं रही; तो पहले जो स्थूलता असत् थी वह बाद में सत् हुई।

**मैवं दूरेऽणवः कुम्भे दृश्याः काचविशेषतः।**
**कुम्भरूपं ततस्तत्र मिथ्या लोकैर्विलोक्यते॥ २१४॥**

उ. - ऐसा नहीं। घट में मेग्निफाईंग ग्लास से देखने पर दूर-दूर अणु बहुत सारे दिखते हैं। उन्हीं में उस ग्लास के हटने पर स्थूलता आदि घटरूप मिथ्या ही लोग देखते हैं।

**विरलेषु हि वृक्षेषु घनश्यामवनं यथा।**
**दूरतो दृश्यते तद्वदणुषु स्थूलतादिकम्॥ २१५॥**

दूर-दूर वृक्षों में दूर से देखने पर सघन श्याम जंगल दिखता है। इस प्रकार दूर-दूर अणुओं में स्थूलता आदि का मिथ्या दर्शन होता है।

**नानाशक्तिविशेषाश्च सर्वत्रेति निरूपितम्।**
**व्याकृताऽव्याकृतेत्यादि बहुधा भेदकल्पना॥ २१६॥**

नाना शक्ति विशेष सर्वत्र है यह पहले ही कहा जा चुका इसी से व्याकृत अव्याकृतादि नाना भेद कल्पना होती है।

**कार्ये निजोद्गते पूर्णे मूलं पूर्णं स्वयं स्थितम्।**
**मृदः कुम्भे समुत्पन्ने कुम्भे मृदिव वर्तते॥ २१७॥**

अपने में (मूल पूर्ण में) उत्पन्न जो कार्य है उस मूल पूर्ण स्वयं रहता है। जैसे मिट्टी में उत्पन्न घट में वही मिट्टी रहती है।

**अन्योन्याश्रयता तर्हि दोष आपद्यते द्वयोः।**
**तस्मान्मृद्येव कुम्भो, न कुम्भे मृदिति तार्किकाः॥ २१८॥**
**तन्न प्रतीतेः प्रामाण्या-दुभयप्रत्ययेक्षणात्।**
**प्रत्युत प्रत्ययः प्रायः तार्किकाणां विरोधनः॥ २१९॥**
**कुण्डले स्वर्णमित्याहुः को ब्रूते हेम्नि कुण्डलम्।**
**शाखापत्रादयः सन्ति वृक्षे इति जना विदुः॥ २२०॥**
**शाखापत्रादिषु तरुस्तिष्ठतीति वदेन्नु कः।**
**तुष्यतु न्यायतोऽन्योन्य-मन्योन्यस्मिन् प्रचक्ष्महे॥ २२१॥**

अन्योन्य में अन्योन्य रहे (मृत्तिका में घट एवं घट में मृत्तिका रहे) तो अन्योन्याश्रयता दोष अवश्यंभावी है। अतः घट में मिट्टी नहीं, घट मिट्टी में है ऐसा नैयायिकादि कहते हैं। परंतु अनुभव प्रमाण होने से मिट्टी में घट एवं घट में मिट्टी है। बल्कि नैयायिकों का विपरीत है। इस कुण्डल में सोना है बोलते हैं। दो तोला, चार तोला कुण्डल में सोना है। सोने में कुण्डल कौन कहता है? वृक्ष में शाखा-पत्ते आदि हैं कहते हैं न कि शाखा-पत्ते आदि में वृक्ष है। तुष्यतु दुर्जन न्याय से उभय में उभय हम कह रहे हैं।

अन्योन्याश्रयतादोषः कथं तर्हि निवार्यताम्।
तादात्म्यादिति वक्ष्यामस्तार्किकाणां च तद् मतम्॥ २२२॥
वर्तते तार्किकाग्र्याणां तादात्म्येन घटो घटे।
नात्माश्रयो न च त्वं तैस्तत्रह्युरीकृतम्॥ २२३॥
त्यक्तोऽनुभूत्या युक्त्या च तार्किकाणां घटे घटः।
सयुक्तिकं सानुभवं वयं तदभिदध्महे॥ २२४॥

पूर्वोक्त स्थिति मानेंगे तो अन्योन्याश्रय दोष होगा। नहीं। तादात्म्य होने से वह दोष नहीं है। नैयायिक लोग भी तादात्म्य सम्बन्ध से घट में घट मानते हैं। न वहां आत्माश्रयता है और न घट पर घडा ही वहां है। बल्कि नैयायिकों का घट में घट युक्ति अनुभव दोनों से रहित है। हम सयुक्तिक एवं सानुभव कहते हैं।

महाकाशाद् घटाकाशो घटोपाधिवशाद्भवेत्।
व्यापके हि महाकाशे घटाकाशः प्रवर्तते॥ २२५॥
तादात्म्येन घटाकाशे महाकाशश्च वर्तते।
अनिर्वाच्याभिदोपाधि - वशात्समनुभूयते॥ २२६॥
नाधाराधेयताबुद्धि - रत्यन्ताऽभेददर्शिनाम्।
घटे घट इति ब्रूयात् कोनु वाऽनुभवत्यपि॥ २२७॥

महाकाश में घटोपाधि के कारण घटाकाश तैयार होता है। महाकाश व्यापक होने से घट में भी महाकाश रहेगा ही। ऐसा नहीं कि

महाकाश घट में से निकल जायेगा। घटाकाश में तदात्म्येन महाकाश रहता है। क्योंकि उपाधि के कारण एक अनिर्वचनीय भेद भी आ जाता है। अत्यन्त अभेद हो तो आधार-आधेय बुद्धि नहीं होगी। घट में घट (वही घट) है ऐसा न कोई बोलता है और न ऐसा अनुभव ही किसी को होता है।

**सर्वसामान्यसुगमां प्रक्रियां श्रयता मया।**
**व्याख्यायतेऽस्य मन्त्रस्य पूर्वार्धमधुना पुनः॥२२८॥**

सर्व सामान्य के लिये सुगम प्रक्रिया को लेकर इस मन्त्र के पूर्वार्ध की व्याख्या फिर से मैं करता हूं।

**तत्त्वमव्याकृतोपाधि ह्यदः पूर्णमुदीर्यते।**
**व्याकृतोपाधिकं तत्त्वमिदं पूर्णं निगद्यते॥२२९॥**

पूर्णमदः का अर्थ है - अव्यकृतोपाधिवाला तत्त्व। इदं पूर्णं का अर्थ है - व्याकृतोपाधिवाला तत्त्व।

**तद्ध सर्वमिदं तर्हि आसीदव्याकृतं जगत्।**
**तद् व्याक्रियत वै नामरूपाभ्यामिति च श्रुतिः॥२३०॥**

श्रुति-तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत पहले सभी अव्याकृत था। वह नामरूप से व्याकृत हुआ।

**अव्याकृतं बीजशक्तिर्माया सत्तदुपाधिकम्।**
**सदुज्जीवितमेवेदं व्याक्रियेत जगद्विधम्॥२३१॥**

अव्याकृत को ही बीजशक्ति माया आदि कहते हैं। सत्तत्त्व उस से उपहित होता है। सत् के योग से वह उज्जीवित होता है चेतनवत् होता है। तब नामरूपात्मक जगत् रूप से वह व्याकृत होता है। अतः

**सत्तत्त्वं तु पुरस्कृत्य सन्मूलं जगदुच्यते।**
**मायामेव पुरस्कृत्य मायिकं जगदीर्यते॥२३२॥**

सत्तत्त्व को आगे रखकर जगत को सन्मूल सदायतनादि कहते है। माया को आगे करके जगत् को मायिक कहते हैं। मिथ्या कहते हैं। यहां सत्तत्त्व के आगे रखकर पूर्ण अस्ति भाति प्रिय कहते हैं।

अस्ति भाति प्रियं नाम रूपं चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं मायारूपं ततो द्वयम्॥ २३३॥

अस्ति, भाति, प्रिय, नाम, रूप इन में प्रथम तीन ब्रह्म के, द्वितीय दो माया के रूप हैं।

तथा चाव्याकृतोपाधि परोक्षतया स्थितम्।
जगतः कारणं ब्रह्म पूर्णं सच्चित्सुखात्मकम्॥ २३४॥
तथैवेदं नामरूपोपाधि दृश्यतया स्थितम्।
पूर्णं कार्यात्मकं ब्रह्म सच्चिदानन्दलक्षणम्॥ २३५॥

तब प्रथमपाद का अर्थ यह होता है कि अदः-परोक्षरूप से स्थित जगत् कारण ब्रह्म पूर्ण है, सच्चिदानन्दरूप है। तथा इदं-दृश्यरूप से स्थित नामरूप कार्यात्म ब्रह्म पूर्ण है, सच्चिदानन्दरूप है।

द्वे द्रव्ये जन्यजनके घटदण्डौ यथा तथा।
द्वे पूर्णे किं नु? नेत्याह पूर्णात् पूर्णमुदच्यते॥ २३६॥
न जलोर्मी पृथग् द्रव्ये जलादूर्मिरुदच्यते।
उपादेयं न भिन्नं यद् उपादानादुदच्यते॥ २३७॥

कार्य और कारण दो द्रव्य होते हैं जैसे घट और दण्ड। वैसे अदः और इदं ऐसे दो पूर्ण हैं क्या? उत्तर है-नहीं। क्योंकि पूर्ण से पूर्ण उद्गत होता है। उठता है। जैसे पानी और तरङ्ग दो द्रव्य नहीं। पानी से तरंग उठती है। उपादान कारण से उदीयमान कार्य उपादान से भिन्न नहीं होता।

तत्सृष्ट्वा च तदेवानु प्राविशत् पूर्ण एव सः।
प्रवेशोऽपि च तादात्म्यान्न संयोगादितो मतः॥ २३८॥

श्रुति कहती है शरीरादि सृष्टि कर पूर्ण परमात्मा ने उस में अनुप्रवेश किया। प्रवेश भी तादात्म्य से, न कि संयोगादि सम्बन्ध से।

जीवेनानुप्रविश्येति श्रुत्यन्तरमपि स्थितम्।
अतोऽनुप्रविशन्नन्यो जीवोऽन्य इति मा गदीः॥ २३९॥
सहार्थेऽत्र तृतीयाऽस्तु जीवेन सह सोऽविशत्।
जीवरूपेण सोऽविक्षदात्मनेति विशेषणात्॥ २४०॥

जीवात्मा और परमात्मा दो द्रव्य है। जीवात्मा के ग्रहणार्थ आत्मना जोड़ा। नहीं। अन्त में तत्त्वमसि ऐसा एकत्वोपसंहार किया है। उपक्रम में भी एकमेवाद्वितीयं ऐसा एकत्वावधारण और द्वितीय निषेध है।

व्याकृताऽव्याकृतोपाधी भिद्येते नैव पूर्णतः।
सामानाधिकरण्येन द्वयोर्निर्देशदर्शनात्॥ २४१॥

अदः शब्दार्थ अव्याकृत उपाधि और इदं शब्दार्थ व्याकृतोपाधि भी पूर्ण संभिन्न नहीं है। पूर्णम् अदः पूर्णम् इदम् ऐसा सामानाधिकरण्य निर्देश है।

सामानाधिकरण्यं तु भवेद् बाधे विचारतः।
भेदाभेदोऽपि नो तेन शङ्कनीयो मनीषिभिः॥ २४२॥

विचार करने पर सामानाधिकरण्य भी बाध में ही होगा? जैसे सर्पोऽयं रज्जुरेव बोलते हैं। अतः भेदाभेद मत भी अस्वीकृत है।

उपाधिहाने पूर्णैक्यं सच्चिजानन्दलक्षणम्।
उपाधिबाधेऽखण्डं च सच्चिदानन्दमद्वयम्॥ २४३॥

अदः इदं इन उपाधियों के त्यागने से सच्चिदानन्दरूपी पूर्ण की एकता है। उपाधि का बाध होने पर अखण्ड अद्वय सच्चिदानन्द स्वरूप है।

एतत्स्पष्टयितुं ह्यग्र उत्तरार्धं प्रवर्त्स्यति।
प्रसङ्गशुद्धयेऽत्रैव मया किंचिदुदीरितम्॥ २४४॥

उत्तरार्ध में यह स्पष्ट है। प्रसङ्ग शुद्ध्यर्थ हमने थोडा यहां निदर्शन किया।

अन्योऽसावन्य एवाह-मिति जीवोऽभिमन्यते।
भ्रान्तिर्भवति तस्येयं पशुत्वेन स निन्दितः॥ २४५॥

इस प्रकार स्पष्ट ऐक्य प्रतिपादित होने पर भी जो द्वैतवादी परमात्मा भिन्न है, मैं भिन्न हूं ऐसा भेद दर्शन करते हैं वे भ्रान्त है। उस की पशु कहकर श्रुति में ही निन्दा की है।

तत्राद इदमित्येवं द्वितयं भ्रान्तिगोचरम्।
पूर्णद्विरुक्तिस्तद्भ्रान्त्यै पूर्णद्वित्वाद्यसंभवात्॥ २४६॥

उस पूर्ण में अदः इदं ये दोनों भ्रान्ति से प्रतीत हो रहे हैं। इसलिये पूर्ण शब्द की द्विरुक्ति है कि वह भ्रान्ति मिट जाये। क्योंकि पूर्णद्वय संभव नहीं है। दो पूर्ण मानने पर दोनों ही परिच्छिन्न होकर अपूर्ण होंगे। अतएव दो पूर्ण का ज्ञान भी अभ्रान्त नहीं हो सकता।

**अपरिच्छिन्नतत्त्वं हि पूर्णशब्देन गम्यते।**
**तत्रादइदमित्येवं परिच्छेदः क्व संभवी॥ २४७॥**

क्योंकि पूर्ण शब्द से अपरिच्छिन्न तत्त्व ही उपस्थित होता है। वहां अदः इदं इत्यादि परिच्छेद कहां संभव है?

**मालारज्जुः फणीरज्जुर्भूछिद्रो रज्जुरम्बुनः।**
**धारा रज्जुरिति ह्याहुः सर्वभ्रान्तिनिवृत्तये॥ २४८॥**
**अत्रादइदमित्याभ्यां संगृहीतमशेषतः।**
**द्वयोः पूर्णत्वकथनात् सर्वाऽपूर्वभ्रमच्छिदिः॥ २४९॥**

जो माला दिख रही है वह रज्जु है, सर्प रज्जु है, भूछिद्र रज्जु है, जलधारा रज्जु है ऐसी सर्व की भ्रान्ति निवृत्त की जाती है। प्रकृत में अव्याकृत व्याकृत दो ही तो हैं। दो को पूर्ण बताया तो सर्व अपूर्ण भ्रमच्छेदन फल है।

**अपश्यद् विश्वमुदरे मार्कण्डेयः पुरा हरेः।**
**बहिश्च मात्रयाऽद्वैत-मप्यन्ते हरिरूपतः॥ २५०॥**

मार्कण्डेयजी ने बाहर विश्व को देखा फिर बाल मुकुंन्द के उदर में देखा। बाद में हरिमय देखा। अर्थात् व्याकृत अव्याकृत दोनों जाना फिर सर्व बाध से ब्रह्ममात्र अनुभव किया।

**अचष्टाऽऽस्ये बहिश्चैव यशोदा युगपज्जगत्।**
**मृद्भक्षणकलीलायां सर्वं हरिमयं तथा॥ २५१॥**

यशोदा माता ने भी बाहर तथा हरिमुख में साथ-साथ जगत् को देखा-मृद्भक्षण लीला प्रसङ्ग में। अन्त में सब को हरिमय हरिरूप देखा। वहां भी व्याकृत अव्याकृत तथा पूर्णदर्शन का ही वर्णन है। 'मृत्सामत्सीहेति यशोदा' इत्यादि गोविन्दाष्टक में भगवत्पादाचार्य ने भी उसका वर्णन किया है।

# पूर्णस्य पूर्णमादाय

कारणस्य हि सत्त्वेन कार्येऽस्तित्वं प्रतीयते।
तन्तुसत्त्वेन हि पटे सत्ता याऽस्तीतिधीपदा॥ २५२॥

कारण की ही सत्ता से कार्य में अस्तित्व की प्रतीति होती है। तन्तु सत्ता से ही पट की सत्ता है जो अस्ति (है) ऐसी बुद्धि का विषय है।

आदीयेरन् यदि पटात् तन्तवः सर्व एव हि।
तदा किंनु पटस्य स्यात् किं च तत्राविशिष्यते॥ २५३॥
पटस्य शून्यतेव स्यात् सत्ताराहित्यतस्तदा।
तन्तुसत्त्वे हि तत्सत्ता नैव सा तन्तुनिर्गमे॥ २५४॥

पट (कपडे) से सभी तन्तुओं को खींच-खींच कर ले लेंगे तो पट का क्या होगा? क्या बाकी बचेगा? पट तो शून्य ही होगा। तन्तु सत्ता से ही पट सत्ता थी। तन्तु निकल गये सत्ता आयेगी कहां से?

ननु सत् स्यात् कथमसत् नाभावो विद्यते सतः।
पटोऽस्तीत्यभवत् पूर्वं सत्प्रतीतिर्हि वाससि॥ २५५॥
न चाऽसत्येव वसने सत्त्वधीरिति सांप्रतम्।
असतो नैव भवति बुद्धिगोचरता क्वचित्॥ २५६॥
सत्त्वप्रकारताका हि वाच्याऽसति विशेष्यता।
कथं विशेष्यताऽऽधारो भवेदसदितीर्यताम्॥ २५७॥

पू. - सत् पट से तन्तुओं के निकलने पर पट असत् कैसे होता है? गीता में कहा है सत् का अभाव नहीं होता। पहले पट अस्ति (है) ऐसी सद्बुद्धि थी। वह सत् पट असत् कैसे होगा? यह कहें कि असत् पट में सत् प्रतीति हो रही थी। नहीं। असत् बुद्धि विषय नहीं होता। उस में सत्त्व भ्रम नहीं होगा। पटः सत् यहां विशेष्यता पट में कहना होगा। पर पट असत् हो तो विशेष्यता का आधार कैसे होगा?

न चासन्न विशेष्यं स्यादिति ब्रूते भवान् कथम्।
अविशेष्यताधिकरणं कथं तदिति सांप्रतम्॥ २५८॥

· दिकल्पवृत्तिरेवात्र शब्दज्ञानानुपातिनी।
वस्तुशून्या भवेदेषा सद्बुद्धिपरिपन्थिनी॥ २५९॥

शब्द ज्ञानानुपाती वस्तु शून्यो विकल्पः इस पातञ्जल सूत्र के अनुसार सद्बुद्धिविरोधी विकल्पवृत्तिमात्र वहां होगी। अर्थात् अक्षत पट में सत्ता बुद्धि हुई ऐसा ज्ञान रुक जायेगा।

तस्मात् शून्यं कथं सत् स्यान्नाभावो विद्यते सतः।
मैवं न सत् परो नापि शून्यं तन्त्वात्मकः स तु॥ २६०॥
पट इत्युच्यते यद्धि वाचारम्भणमेव तत्।
पटप्रतीतिरपि च मिथ्यैव न हि सा सती॥ २६१॥
अपागादग्नितोऽग्नित्वं वाचारम्भणमेव तत्।
त्रीणि रूपाणीति सत्यमित्यवोचत च श्रुतिः॥ २६२॥
शुक्ललोहितकृष्णानि तेजोऽबन्न स्वयुज्यतः।
अपागादग्नितोऽग्नित्व बुद्धिर्विभ्रमरूपिणी॥ २६३॥

इसलिये पट से तन्तुओं को हटाने पर पट शून्य हो जायेगा कहना सही नहीं है। सत् का अभाव नहीं होता।

उ. - पट सत् नहीं है असत् भी नहीं है। पट तन्तु स्वरूप ही है। 'पट' से ऐसा वाचारम्भणमात्र है। पट प्रतीति भी मिथ्या है। इसलिये श्रुति में कहा अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् तेज-जल-अग्नि (पृथ्वी) के लाल-सफेद-कृष्ण ये तीन वर्ण अग्नि में है। इन तीन के निकलने पर अग्नि का अग्नित्व ही निकल जायेगा। अग्नित्व बुद्धि मिथ्या बुद्धि मात्र होगी।

अन्वानाहे हि दृश्यन्ते तन्तवः पटरूपतः।
पटत्वबुद्धिर्मिथ्यैव तदुत्पत्तेरसंभवात्॥ २६४॥
न चैकत्वमहत्त्वादिबोधोद्भावकरूपतः।
पटो ह्यवयवी कश्चिद् मन्तव्य इति सांप्रतम्॥ २६५॥
पदातिसेना महती योद्धुं वेगेन गच्छति।
इत्येवं योधसां व्यूहे महत्वादिमतीक्षणात्॥ २६६॥

न योधसो मिलित्वैकोऽवयवी किल जायते।
न तार्किकमहावीरोऽप्येतत् साधयितुं क्षमः॥२६७॥
एकैके योधसो नैव पराजेतुं परान् क्षमाः।
नैकैकाण्व्यो जलं धर्तुं, क्षमासेना क्षमो घटः॥२६८॥
अतश्चावयवी नान्यः सेनावदिति निश्चयः।
तथैकत्वमहत्त्वादि वाचारम्भणमेव तत्॥२६९॥
तन्तुभिन्नत्वत्तः शून्यं पटो नैवात्र संशयः।
योद्धृभिन्नत्वतः शून्यं सेना नाम यथा तथा॥२७०॥

तानाबाना करने पर तन्तु ही कपडे के रूप में दिखते हैं। पटत्व बुद्धि मिथ्या हैं। पटत्व की यहां उत्पत्ति नहीं हो सकती। यह कहें कि एक महान् वस्त्र है ऐसे एकत्व महत्त्वादि का आश्रय अवयवी मानना चाहिये। नहीं। यह बड़ी पदाति सेना जा रही है इस प्रकार एकत्व महत्त्वाश्रय योद्धाओं का भी अवयवी तब मानिये। क्या कोई तार्किक महावीर भी अतिरिक्त योद्धा समुदायजन्य अवयवी मान.पायेगा? बिखरे हुए अणुओं में पानी नहीं भरते, घट में पानी भरते हैं। अतः घट अलग है तो एक-एक बिखरे योद्धा शत्रुओं को परास्त नहीं करते। संगठित सेना शत्रुओं को परास्त करते हैं, अतः सेना भी योद्धा से अलग होगी। अतः एकत्व महत्त्व पटत्व सेनात्वादि सभी वाचारम्भण है। पट तन्तुरूप से है मानो तो मान्य है, तन्तु भिन्न पट वाचारम्भण है जैसे योद्धाओं से भिन्न सेना है कहो तो वाचारम्भण ही है।

तन्तुष्वप्यंशुसत्तैवाऽसन्तोंऽश्वपगमे च ते।
वाचारम्भणमात्राः स्युस्तन्तवोऽपि न संशयः॥२७१॥
अंशुष्वप्यणुसत्तैवऽसन्तोंऽण्वपगमेंऽशवः।
वाचारम्भणमेवातो ह्यंशवोऽपि न संशयः॥२७२॥
तन्मात्रांशत्रयीसत्ता ह्यणौ तत्पृथगीक्षणे।
अपागादणुताणूनां त्रीणि रूपाणि सन्ति तु॥२७३॥
अन्नमात्रासु चाम्मात्रा तेजोमात्रैव तत्र च।
वाचारम्भणमेवातोऽन्नाम्भोमात्रे च निश्चयः॥२७४॥

तेजोमात्रास्थसत्ता च ब्रह्मसत्तैव नापरा।
तेजस्त्वं तेजसोऽपागाद् वाचारम्भणमेव तत्॥ २७५॥
सन्मूलं सकलं विश्वं सत्सत्ता परमा सती।
तदादाने च तत्सत्ता भिन्नं शून्यं न किंचन॥ २७६॥

तन्तुओं में अंशु (तन्तु का पूर्वरूप धागा निर्माण योग्यतापन्न रूई) की सत्ता है। अंशु निकल जाये तो तन्तु असत् ही है। वाचारम्भण मात्र है। अंशु अणु से बना तो उस में अणु की सत्ता है। अंशु वाचारम्भण है। अणु त्रिवृत्कृत तेज, जल, पृथिवी समुदाय है। वे हट जायें तो अणु भी शून्य है। तीन भागों में पृथिवी मात्रा में जलमात्रासत्ता, जलमात्रा में तेजोमात्रासत्ता होने उन के क्रमशः हटने पर वे दोनों शून्य वाचारम्भण है। तेजोमात्रा सद् ब्रह्म सत्ता से सत् है। ब्रह्म सत्ता हटी तो तेज भी शून्य। यह सब कैसे? क्योंकि 'सन्मूलाः सोम्येनाः प्रजाः' ऐसी श्रुति है। प्रजायमान-उत्पद्यमान ही प्रजा। सब का मूल सत् ब्रह्म है। कारण सत्ता ही कार्य में सत्ता है। कारण हट जाये सभी सत्ताशून्य होंगे शून्य होंगे। सत् सत्ता अन्य कुछ भी नहीं रहेगा।

तथा च श्रुतिरप्याह नेह नानास्ति किंचन।
इह नानेदमर्थान्यद् नैव किंचन विद्यते॥ २७७॥

श्रुति भी कहती है - नेह नानास्ति किंचन। नञ् (न) से नाना शब्द है। इह में इदं शब्द है। 'इदं के अर्थ ब्रह्म से अन्य' यह इह नाना का अर्थ है। वह कुछ भी नहीं है, शून्य है।

नानेत्यनेकवाचित्वेऽप्येतमेवार्थमानयेत् ।
द्वितीयसत्त्वे नानात्वं तत् स्वास्मिन्नपि वर्त्स्यति॥ २७८॥

नाना का अनेक अर्थ करेंगे तो भी वही अर्थ आयेगा। द्वितीय आ गया तो ब्रह्म और द्वितीय दोनों मिलकर नाना हो गये वह नानात्व ब्रह्म में भी आयेगा।

तन्निषेधो द्वितीयस्याप्यसत्त्वादेव युज्यते।
एकमेवाद्वितीयं स-दिति श्रुत्या समर्थितात्॥ २७९॥

उस नानात्व का निषेध द्वितीय भी न हो तभी संभव है। एकमेवाद्वितीयं यह श्रुति द्वितीय सत्त्वाभाव का समर्थन करती है।

**नानात्मना दृश्यमाने भवे नानेह नास्ति हि।**
**मृत्योः स मृत्युमाप्नोति यो नानेवेह पश्यति॥ २८०॥**
**नानेवेतीवकारेण मिथ्यात्वं तस्य दर्शितम्।**
**तथा च परमं सत्यमेकमेव सदद्वयम्॥ २८१॥**

'इह' का संसार अर्थ करें तो भी वही अर्थ है। नानारूपेण दृश्यमान इस संसार में वस्तुतः नाना नहीं है। नाना जैसा देखनेवाला मृत्यु से मृत्यु को प्राप्त होता रहेगा। यहां 'इव' जैसा नाना का मिथ्यात्व सूचित होता है। जैसे शुक्ति चांदी जैसी दिख रही है इत्यादि में तात्पर्य यह है कि परम सत्य एक ही है वह सत्=सत्तारूप है, अद्वितीय है।

**तत्सत्तयैव जगतः सत्ता या पूर्णलक्षणा।**
**तदादाने तदाच्छेदे किमेवात्रावशिष्यते॥ २८२॥**

नानाविध कार्यों में कारण की ही सत्ता निश्चित है। कारण ब्रह्म की सत्ता ही इसलिये जगत की सत्ता है, स्वतः वह तो सत्ताहीन मृषा ही है।

**घटो भातीतियद्भानं न स्वयंप्रभतावशात्।**
**न चैतन्यं घटोऽतो न चैतन्याश्रयतावशात्॥ २८३॥**
**चक्षुरादिगतं भानं वीक्षते चक्षुरित्यतः।**
**तत्संयोगाद्धि विविदुर्घटभानं मनीषिणः॥ २८४॥**
**चक्षुः सत्त्वे घटो भाति न भानं चक्षुषा विना।**
**अन्वयव्यतिरेकाभ्यां भानं सिध्यति चाक्षुषम्॥ २८५॥**
**श्रोत्रसत्त्वे शाब्दभानं न तद्भानं श्रुतेर्विना।**
**अन्वयो व्यतिरेकश्च ततोऽन्यत्रापि वीक्ष्यताम्॥ २८६॥**

घट भास रहा है ऐसा घटमान जो प्रतीत हो रहा है वह घट स्वयं प्रकाशरूप होने से नहीं, और स्वयं प्रकाश चैतन्याश्रय होने से भी नहीं है। क्योंकि घट जड है उस में चैतन्य नहीं है। तब घट कैसे भास रहा है? चक्षु से भास रहा है। चक्षु में चैतन्य है। पूरे शरीर में चैतन्य शक्ति

है। अतः आंख में भी है ही। चक्षु है तो घट भासता है, नहीं तो नहीं ऐसा अन्वय व्यतिरेक भी है। इसी प्रकार श्रोत्र हो तो शब्दभान होता है अन्यथा नहीं इत्यादि समझना चाहिये।

न वा चाक्षुषचैतन्यप्रयुक्तं घटभासनम्।
मनसोऽन्यत्र गमने न तद्भानं भवेद्यतः॥२८७॥
हन्ताऽन्यत्रमना आसं नाऽद्रक्षमिति दर्शनात्।
नाश्रौषमहमन्यत्रमना इति च दर्शनात्॥२८८॥

किन्तु चाक्षुष चैतन्य प्रयुक्त भी घट भान नहीं है। मेरा मन अन्यत्र गया मैंने नहीं देखा, मैंने नहीं सुना। श्रुति भी कहती है - 'अन्यत्रमना अभूवं नाद्राक्षम् अन्यत्र मना अभूवं नाश्रौषम्' इत्यादि।

तस्मान्मानसचैतन्यप्राप्तं पश्यति वीक्षणम्।
श्रवणादिकमप्येवं मनश्चैतन्यसंयुतम्॥२८९॥
न च सत्त्वेऽपि मनसो नाऽचक्षुर्वीक्षते घटम्।
विनापि चक्षुःसाहाय्यं स्वप्ने यद् वीक्षते घटम्॥२९०॥

परंतु चक्षु के बिना भी घट नहीं दिखता। कौन बोला? सपने में चक्षु काम नहीं करती। अथ च मन घटादि को देखता है, शब्दादि सुनता है।

सतो विशेषदृष्ट्यर्थं मनसो दृष्ट्यपेक्षिता।
दूरवीक्षणभिन्नादेः चैतन्यं स्यात्तवान्यथा॥२९१॥

विद्यमान वस्तुओं के विशेष दर्शनार्थ मन को नेत्र की अपेक्षा होती है। जैसी सूक्ष्म दर्शन के लिये दूरबीन की अपेक्षा होती है। तो क्या दूरबीन में चैतन्य रहता है?

सूक्ष्मव्यवहितादीनि पश्यन्ति किल योगिनः।
योगमन्त्रौषधीनां स्याच्चैतन्यं तत्प्रयोजिनाम्॥२९२॥

सूक्ष्म व्यवहित विप्रकृष्टादि का भी योगियों को दर्शन (मानसिक दर्शन) होता है। तो योग, मन्त्र, औषधि आदि प्रयोजक चेतन होने लगेंगे।

मनसा पश्यति ह्येष शृणोति मनसा तथा।
इत्यादि श्रुतितः सिद्धं चक्षुरादि सहायकम्॥२९३॥

मनसा ह्येष पश्यति, मनसा शृणोति, मनसा विजानाति इत्यादि श्रुति से मुख्य दर्शनादिकारी मन है। चक्षु आदि सहायक मात्र है यह सिद्ध होता है।

न चैव भानसामान्ये मनो भवति कारणम्।
अस्वाप्सं सुखमित्येवं सुषुप्तावपि भानतः॥ २९४॥
भाने नानाविधाकारसमर्पणकरं मनः।
प्रकाशरूपं भानं तु मतं केवलमात्मनः॥ २९५॥

सामान्य भान में मन भी कारण नहीं है। सुषुप्ति में मन नहीं रहता। सुखस्वापभान होता है। आत्मा ही भानात्मक है। उस में मन भी केवल आकार समर्पक है।

स्वाकारमादधात्यक्ष्णि घटो मनसि चाक्षि तत्।
मनस्तदात्मन्यादध्याद् घटभानमिदं मतम्॥ २९६॥
कलशच्छायसंयोगादक्षि स्यात्कलशाकृतिः।
तत्संयोगान्मनश्चैवं तद्योगाद् भानमेव च॥ २९७॥

ऐसा समझो घट अपना आकार आंख में डालता है, आंख मन में, मन आत्मारूपी प्रकाश में। यही घटभान है। अथवा घट की छाया के संयोग से आंख घटाकार होती है। यही घटाकार चाक्षुषवृत्ति कहलाती है।

चलचित्रप्रभायां हि छायासंयोगतो यथा।
छायाकारो भवेदक्षि-त्विषि तद्वद्घटाकृतिः॥ २९८॥
तद्योगाच्च तदाकारः सम्पद्येत मनस्त्विषि।
तद्योगेन भवेदात्म-प्रकाशे च तदाकृतिः॥ २९९॥
अक्ष्यादौ भौतिकी त्विट् स्याज्ज्ञानात्मा पुनरात्मनः।
यद्वा तत्तदवच्छिन्नचितिस्तत्तत्त्विडिष्यताम्॥ ३००॥

जैसे सेनेमा की विद्युत्प्रभा में या नाटक दीप में छाया (मनुष्यादि की फिल्म) के संयोग से चित्राकार में प्रकाश दिखता है वैसे वस्तुच्छाया के संयोग से अक्षि प्रभा वस्त्वाकार हो जाती है। उसके संयोग से मनः-प्रभा वस्त्वाकार हो जाती है। उस के संयोग से आत्मप्रकाश वस्त्वाकार हो जाता है यही घटमान है। उस में अक्षिप्रभा आदि भौतिक प्रभा है।

आत्मप्रभा चैतन्य है। अथवा अक्षिप्रभा आदि भी अक्षि आदि अवच्छिन्न आत्मप्रकाश ही है।

आत्मभानमतो भाति सर्वत्रेति विनिश्चयः।
विषयेन्द्रियभेदादेर्भाति नानेव वस्तुषु॥ ३०१॥
तमेव भान्तमनुभात्येतत् सर्वमशेषतः।
तस्य भासा सर्वमिदं विभातीतिवचः श्रुतेः॥ ३०२॥

अतः यह सिद्ध हुआ कि आत्मभान ही सर्वत्र 'भाति' शब्द से कहा जाता है। विषय एवं इन्द्रियादि से वह एक होने पर भी नाना सी हो जाती है। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति यह श्रुति भी है।

आत्मचैतन्यमूलं हि सकलं संप्रकाशते।
तदादाने तु जगतो जगदन्धं प्रसज्यते॥ ३०३॥
नासदासीन्नो सदासीत्तम असीदिति श्रुतिः।
तमसा गूढमग्रेऽभूद् यत्किंचित्सचराचरम्॥ ३०४॥

आत्मचैतन्यमूलक सकल जगत का प्रकाशन है। आत्मचैतन्य जगत् से हट जाये तो जगत अन्ध हो जायेगा। आत्म चैतन्य प्रसार से पूर्व न असत् था न सत् था तम ही था। तम से पूरा जगत् अदृश्य हो गया था। श्रुति।

प्रकाशते तमश्चापि स्वप्रकाशेन तेन हि।
राहुग्रस्तेन सूर्येण यद्वद् राहुः प्रकाशते॥ ३०५॥

वह तम भी उसी आत्मप्रकाश से प्रकाशित होता है। जैसे राहुग्रस्त सूर्य उसी राहु को प्रकाशित करता है।

द्रष्टुर्दृष्टेर्न विपरि-लोपः खलु कदाचन।
तेन भातं जगत् तस्याऽऽदाने किमवशिष्यते॥ ३०६॥

द्रष्टा की दृष्टि का लोप नहीं होता। उससे जगत् भासित है। उसको लेने पर क्या अवशिष्ट रहेगा?

आलोक्य सुन्दरं रूपमानन्दं लभते परः।
अपूपं मिष्टमास्वाद्य मज्जत्यानन्दसंप्लवे॥ ३०७॥

चन्दनागुरुगन्धादेः प्रियादिस्पर्शतोऽपिच।
भैरवीरागललित - संगीतादि श्रुतेरपि॥ ३०८॥
विषयेष्वत आनन्द- स्तन्नानैकान्तिकत्वतः।
बुक्कन्ति कुक्कुरा राज-कुमारीमकभि संमुखम्॥ ३०९॥
खादन्ति मृतकं गृध्राः त्यक्त्वा मिष्टान्नसौरभम्।
रागालापं विलापं तु मन्यन्ते ग्राम्यजीवनाः॥ ३१०॥
श्रुत्वा पुत्रमृतिं सर्वं नीरसं जगदीक्षते।
न सुखं भोजने नापि स्वापे गीतादिके तथा॥ ३११॥

सुन्दर रूप देखने पर आनन्द होता है। मालपुआ आदि के खाने में आनन्द मिलता है। सुगन्धि द्रव्य से आनन्द मिलता है। प्रिय दारपुत्रादि स्पर्श से आनन्द मिलता है। भैरवी मालकौस आदि रागयुक्त संगीत श्रवण से आनन्द मिलता है। अतः विषयों में सुख है। नहीं। यह सब अनिश्चित है। सुन्दर राजकुमारी को देखकर कुत्ता भोंकता है। उसको रूप से सुख क्यों नहीं मिला? गिद्ध मिष्टान्न छोड़कर शव खाता है। उसे सूंघने में उस को सुख मिलता है। मनुष्यों में भी कोई अपने प्रिय पुत्र की मृत्यु की खबर सुनी तो उस को सारा जगत् नीरस हो जाता है। उस को न भोजन से सुख मिलता है, न शयन से, और न गीत नृत्यादि से।

ननु तर्हीन्द्रियेषु स्यादानन्दश्चक्षुरादिषु।
न च रूपाद्यभावेऽपि सुखं स्यादिति सांप्रतम्॥ ३१२॥
विषया व्यञ्जका यस्मात् सुखस्येन्द्रियवर्तिनः।
व्यञ्जकत्वं फलबलात् कल्प्यते तु पृथक् पृथक्॥ ३१३॥
स्वप्नेषु विषयाभावेऽप्यस्त्यानन्दो मृषार्थतः।
विषये सत्यपि सुखं जायते न वियोगिनः॥ ३१४॥
भवेदिन्द्रयशैथिल्यं - पुत्रदारवियोगतः।
तदभावविशिष्टार्थसंयोगो व्यञ्जकस्ततः॥ ३१५॥
मैवं स्वप्ने न विषया नेन्द्रियाण्यपि तर्हि भोः।
सुखं तदापि भवति तस्मान्नेन्द्रियमाश्रयः॥ ३१६॥

मिथ्यार्थेषु न चेत् सौख्यं नैव मिथ्येन्द्रियेष्वपि।
आनन्दमय कोशेऽत आनन्द इति युज्यते॥३१७॥
अस्ति जाग्रति कोशोऽसावस्तिस्वप्नेऽप्यसंशयः।
इष्टार्थदर्शनं तस्मिन्नानन्दव्यञ्जनं मतम्॥३१८॥
इष्टार्थः सन्नसन् वा स्यान् मृषातत्प्राप्तिवृत्तितः।
चित्तवृत्तिरुताज्ञान - वृत्तिरानन्दमानयेत् ॥३१९॥

तो इन्द्रियों में आनन्द माना जा सकता है। इन्द्रियों में आनन्द हो तो सुन्दर रूप, मिष्ट भोजनादि के बिना ही आनन्द क्यों नहीं होता? इसलिये कि ये विषय इन्द्रियगत आनन्द के अभिव्यञ्जक हैं। फल बल से आनन्द व्यञ्जक की कल्पना करो। स्वप्न में विषय न होने पर भी आनन्द होता है। जाग्रत में विषयों के होने पर भी पुत्रादि वियोगकाल में आनन्द नहीं होता। अतः कार्यानुसार व्यञ्जक कल्पना है। गृध्रादि में शवादि सुखव्यञ्जक है। वियोगकाल में इन्द्रियां शिथिल पड़ जाती है इसलिये सुख नहीं होता। ये सारी बातें भी सही नहीं है। सपने में विषय नहीं है तो इन्द्रियां भी तो नहीं है और स्वप्न कल्पित दारसुतादि से सुख होता है। अतः विषयों में नहीं इन्द्रियों में भी नहीं, आनन्दमय कोश में आनन्द है। वह कोश जाग्रत एवं स्वप्न दोनों में है। इष्टार्थ दर्शन ही आनन्द का अभिव्यञ्जक है। चाहे वह इष्टार्थ प्रातिभासिक ही क्यों न हो। इष्टार्थप्राप्ति वृत्ति चाहे चित्त वृत्ति हो चाहे अज्ञान वृत्ति। उससे सुखाभिव्यक्ति होगी ही।

मैवमानन्द आनन्दमयकोषेऽपि नास्ति भोः।
नानन्दमयकोशोऽस्ति सुषुप्तौ सुखमस्ति च॥३२०॥

आनन्दमय कोश में सुख है यह भी मत सही नहीं है। सुषुप्ति में आनन्दमय कोश नहीं है फिर भी सुखानुभव होता है।

दुःखाभावे सुखमतिः सुषुप्तौ किं न मन्यताम्।
भाराभावे सुखी जात इति प्रैष्या यथा विदुः॥३२१॥

पू. - सुषुप्ति में दुःखाभाव होने से उसी से यह सुखमति है। जैसे मजदूर भार नीचे उतारकर समझता है मैं सुखी हो गया। भाराभाव में यह

सुखमति है।

मैवं निदुःखमस्वाप्समिति नो वक्तिकश्चन।
भावस्मृतिर्हि सर्वेषां सुखमस्वाप्समित्यसौ॥ ३२२॥

उ. - कौन ऐसा बोलता है कि मैं बिन दुःख सोया। अभावरूप से कोई नहीं करता। भावरूप से ही सभी स्मरण करते हैं - मैं सुखपूर्वक सोया। सानन्द सोया इत्यादि।

कथं च भवति ज्ञानं सुषुप्तौ प्रतियोगिनः।
अभावधीर्न भवति प्रतियोगिधियं विना॥ ३२३॥

और यह बताईये दुःखाभावपूर्वक सोया ऐसा ही ज्ञान मान लो परंतु प्रतियोगिज्ञान कैसे हुआ? प्रतियोगिज्ञान के बिना अभावज्ञान नहीं होता।

तर्कालङ्कारविदुषाप्युक्तं दीधितिटिप्पणे।
नेति ज्ञानं न भवति प्रतियोगिनमस्पृशत्॥ ३२४॥

जगदीश तर्कालंकार ने भी दीधिति की व्याख्या में शास्त्रार्थ के साथ यह निर्णय दिया है कि प्रतियोगी का स्पर्श किये बिना 'न' इत्याकारक अभावज्ञान नहीं होता है।

सुषुप्तौ यदि दुःखस्य ज्ञानं चेत् प्रतियोगिनः।
कथं सुषुप्तिरेवेयं सप्रकारकधीयुता॥ ३२५॥
न चानुभवरूपं तद् दुःखज्ञानं सुषुप्तिगम्।
दुःखभावमतिस्तर्हि विरोधाज्जायतां कथम्॥ ३२६॥
कश्च वा कस्य वा तत्र संनिकर्षो निगद्यताम्।
पुरीतत्स्थस्य मनसः संनिकर्षो न विद्यते॥ ३२७॥
न स्मृतिर्नैव संस्कारो-द्बोधकः कोपि विद्यते।
अस्ति चेत् सस्मृतिर्नैव सुषुप्तिपदभागिति॥ ३२८॥

सुषुप्ति में दुःखाभाव ज्ञान मान लो तो प्रतियोगि दुःख का ज्ञान भी होगा। तब वह काहे की सुषुप्ति है जो सप्रकारक ज्ञानवाली है। अच्छा, प्रतियोगिज्ञान-दुःखज्ञान अनुभवरूप है या स्मरणरूप? यदि अनुभवरूप है तो दुःख रहा तो विरोधी के होने से दुःखाभाव ज्ञान कैसे होगा? फिर

अनुभव के लिये संनिकर्ष भी कहना पडेगा। क्योंकि ज्ञानाकरणक ज्ञान प्रत्यक्ष ही होगा। ज्ञानकरणक होगा। एक अतिरिक्त ज्ञान भी मानना पड़ेगा। अतः कौन सा संनिकर्ष किसका संनिकर्ष। मन तो सुषुप्ति में पुरीतत् नाड़ी में चला गया। उस का संयोग समवायादि सभी संनिकर्ष सुषुप्ति में अमान्य है। अतः प्रतियोगी दुःख का स्मरण मानो। तो स्मरण के लिये उद्बुद्ध संस्कार चाहिये। संस्कारोद्बोधक वहां कौन है? यदि उद्बोधक रहा तो स्मृति हो गयी सुषुप्ति में तब उसको सुषुप्ति शब्द से बोलना बेकार होगा।

तस्मात्तां स्वप्रकाशात्माऽऽनन्दस्फुर्तिं हि मन्महे।
यतोऽस्वाप्सं सुखमिति परामर्शोऽनुजाग्रतः॥ ३२९॥
अविद्यायास्तदा सत्त्वान्न स्पष्टस्फुरणं चितः।
ततो न परमानन्द-स्फुरणं तु तदा भवेत्॥ ३३०॥
सति संपद्य न विदुरित्यविद्यां श्रुतिर्जगौ।
तद्वृत्त्या स्मरणं चैव जाग्रतोऽस्योपपद्यते॥ ३३१॥

तब मोक्ष और सुषुप्ति में क्या फरक? सुनो। सुषुप्ति में अविद्या के होने से परमानन्द का स्पष्ट स्फुरण नहीं होता। 'सति संपद्य न विदुः' इस श्रुति में 'न विदुः' अर्थ अविद्या है। उस अविद्यावृत्ति के होने से जाग्रत में सुख स्मृति है।

तस्मादात्मन आनन्द आत्मैवानन्दलक्षणः।
ततो विषयपर्यन्तसुखप्रत्यय इष्यते॥ ३३२॥
एतस्यैवान्यभूतानि ह्यानन्दस्य परात्मनः।
उपजीवन्ति मात्रामि-त्यूचे भगवती श्रुतिः॥ ३३३॥

इसलिये आत्मा का ही आनन्द है या बोलिये आत्मा ही आनन्दरूप है। वहां से नीचे विषय पर्यन्त सुख प्रत्यय उस आत्मानन्द से ही है। शब्द स्पर्शादि आनन्द, चाक्षुष श्रवणादि आनन्द, मानस आनन्द ये सभी आत्मानन्द की मात्रा ही है। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति यह श्रुति है।

एतेभ्योह्यन्यभूतेभ्य आनन्दच्छेदनं यदि।
क्रियते तर्हि तेष्वेव किं नु नामावशिष्यते॥ ३३४॥

आत्मानन्द की मात्रा के उपजीवी इन विषयों से लेकर आनन्दमय कोशपर्यन्त समस्त भूतों से यदि आनन्द को छीन लें तो क्या अवशिष्ट रहेगा? [एतेभ्यः=पूर्वोक्त रूपरसादि आनन्दमयकोशपर्यन्त - अन्य भूतेभ्यः= अन्यानिभूतानिमात्रामुपजीवन्ति में बताये भूतों से]

## पूर्णमेवावशिष्यते

पूर्णत्वं सच्चिदानन्दस्वरूपं प्राङ् निरूपितम्।
तदेव परमं ब्रह्म वेदान्तेषु प्रकीर्तितम्॥ ३३५॥
तद्ध्युपादानमेतस्य जगतः कार्यलक्ष्मणः।
कार्यं च तेन भवति सच्चिदानन्दालक्षणम्॥ ३३६॥
तथा चोक्तं पूर्णमिदमिदंकारास्पदं जगत्।
पूर्णस्य तत आदाने किं तावदवशिष्यते॥ ३३७॥

पूर्ण का अर्थ पूर्व सच्चिदानन्द बताया वही परब्रह्म वेदान्त में बताया। वह जगत् का उपादान है इसलिये जगत् भी सच्चिदानन्द है। यही पूर्णमिदं का अर्थ है। इदंकारास्पद जगत् से पूर्ण निकाले तो क्या बचेगा?

अत्राहुः सद्धि सत्यं स्यात् सत्यतापगमे सति।
मिथ्या विलोकते लोको मिथ्या तेनावशिष्यते॥ ३३८॥
न च सत्त्वं हि सत्यत्वं तस्य निर्गमने सति।
असन्नृभृङ्गवन्नूनमवेद्यमिति सांप्रतम्॥ ३३९॥
असत्त्वेऽपि खनीलिम्नो ह्यस्तीति प्रत्ययेक्षणात्।
तथा जगदसच्चापि नैवास्त्यन्तमसद् भवेत्॥ ३४०॥
एतदुक्तं भवत्येतत् सदसद्भिन्नलक्षणम्।
जगत् सन्निर्गमे सर्वं भवेन्मिथ्यापदास्पदम्॥ ३४१॥
खनैल्यमाद्यं दृष्टान्तोऽपरं दार्ष्टान्तिकं जगत्।
प्रातिभासिकसत्त्वाद्यं व्यावहारिकसत् परम्॥ ३४२॥

इस पर विद्वान् लोग कहते हैं सत् का सत्य अर्थ है। सत् निकलने पर मिथ्या रहेगा। पर सत् निकला तो नरशृंगवत् जगत असत् होगा। नहीं।

असत् होने पर अस्ति (है) ऐसा रहेगा। जैसे आकाशनीलिमा। अर्थात् जगत् सदसद्भिन्न रहेगा, न कि अत्यन्त असत्। यही मिथ्या पदार्थ है। आकाशनीलिमा दृष्टान्त और जगत् दार्ष्टान्तिक है। प्रथम प्रातिभासिक सत्तावाला है। द्वितीय व्यावहारिक सत्तावाला है।

**अथैतस्माच्चितोऽपाये किं तावदवशिष्यते।**
**अत्राहुश्चित आदाने जडमेवावशिष्यते॥ ३४३॥**
**न चाधुनापि च जगद् जडमेवावलोक्यते।**
**चिद्योगे चिदपाये चाऽविशेष इति सांप्रतम्॥ ३४४॥**
**मनुष्यपशुपक्ष्याद्या द्रष्टृदृश्योभयात्मकाः।**
**आब्रह्मस्तम्बपर्यन्तं सर्वमेव जगत्तथा॥ ३४५॥**
**न चास्ति दृष्टता क्वापि मृदादेरिति सांप्रतम्।**
**मृदब्रवीदिति गिरा देवतादात्म्यसत्त्वतः॥ ३४६॥**
**प्रसिद्धा पृथिवी देवी तथैव जलदेवता।**
**अग्निदेवो वायुदेव इति शास्त्रेषु वर्णितम्॥ ३४७॥**
**जडाजडात्मकमिदं यत्किंचित् सचराचरम्।**
**चिदपाये पुनरिदं जडमेवावशिष्यते॥ ३४८॥**

अब पूर्णरूप से स्थिज जगत् से चित् का निर्गम होने से क्या रहेगा? जड मात्र रहेगा। पर अब भी मिट्टी पत्थर आदि जड ही है। चित् के रहने न रहने में क्या फरक? नहीं। मनुष्य, पशु, पक्षी आदि जड चेतन उपभयात्मक है। ब्रह्मा से स्तम्ब पर्यन्त सभी जड चेतन उभयात्मक है। सभी द्रष्टदृश्य उभयात्मक है। यह कैसे? मिट्टी पत्थर आदि केवल दृश्य है द्रष्टा नहीं। ऐसी बात नहीं। मुदब्रवीत-मिट्टी बोली इत्यादि श्रुति है। पृथिवी देवी, जल देवता, अग्नि देवता, वायु देवता यह सब शास्त्रों में प्रसिद्ध है। अतः जगत् जडाजडरूप है। उस में से चित् निकलेगा तो जड मात्र बचेगा।

**अथानन्दापगमने किं तावदवशिष्यते।**
**आहुरानन्दविगमे दुःखमेवावशिष्यते॥ ३४९॥**

सुखदुःखात्मकमिदं जगदेतच्चराचरम्।
नूनं तस्मात् सुखादाने युक्तं दुःखावशेषणम्॥ ३५०॥
न च वाच्यं चिदादानात्कस्य दुखं जगद् भवेत्।
न ह्यज्ञाते सुखे दुःखे किंचिन्मानं भवेदिति॥ ३५१॥
यतः पृथक्कृत्य यदा ह्यानन्दं ब्रह्म वीक्षते।
तदा द्रष्टुर्भवेद् दुःख-मेव सर्वं विवेकिनः॥ ३५२॥

अब आनन्दरूपी पूर्ण के आदान से क्या अवशिष्ट होता है यह देखें। इस पर भी विद्वान् लोग कहते हैं आनन्दापगम होने से दुःख बचेगा। क्योंकि जगत् सुखदुःखात्मक है। यह कहें कि चित् का आदान हो गया तो जगत् दुःखरूप किस के लिये होगा? अज्ञात सुख या दुःख में प्रमाण माना नहीं गया है। चित् गया तो ज्ञाता कौन होगा? सुनो जब विवेकी जगत् से आनन्दरूपी ब्रह्म को पृथक् करके देखेगा तब उसको सारा संसार दुःखरूप दिखेगा। 'दुःखमेव सर्वं विवेकिनः' यह पातञ्जल सूत्रांश है।

इदं पुनरिह ज्ञेयं साधकस्येदमीरितम्।
ज्ञानयुक्तस्य च प्राय इयमेव स्थितिर्मता॥ ३५३॥

अब विशेष ज्ञातव्य बात आगे करते हैं। यह जो विवरण पूर्णादान का दिया यह साधक साधुओं का है। शास्त्रविषयक निश्चयात्मक ज्ञान पायें हुओं की भी प्रायः यही स्थिति है। वे भी इस संसार को देखते हुए ही इसे मिथ्या, जड एवं दुःखरूप समझते हैं।

सिद्धः पुनः पृथक्कृत्य यदा पश्यति निर्मलम्।
परं ब्रह्म तदा तस्य पूर्णमेवावशिष्यते॥ ३५४॥

जो सिद्ध पुरुष है वह जगत् से पृथक् करके संसारमलरहित ब्रह्म का दर्शन करता है तब पूर्णमात्र ही अवशिष्ट रहता है। वह मिथ्या जड एवं दुःखरूप से भी जगत् को नहीं देखता है।

देहं च पश्यति न स स्थितमुत्थितमेव वा।
स्वरूपाधिगमात् सिद्ध इत्याह कपिलो मुनिः॥ ३५५॥

इस विषय में कपिल भगवान् का यह वचन महत्त्वपूर्ण है। भागवत में

देहं च तं न चरमः स्थितमुत्थितं वा।
सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम्॥
दैवादुपेतमथ - दैववशादपेतं।
वासो यथा परिकृतं मदिरामदान्धः॥

चरम निवृत्ति को प्राप्त ज्ञान सिद्ध पुरुष इस शरीर को भी नहीं देखता कि यह बैठा है कि खडा है। क्योंकि उस ने अपने स्वरूप को प्राप्त कर लिया है। उस का व्यवहार ऐसा लगेगा कि वह कदाचित् मदिरामत्त तो नहीं है। जैसे वह होश न होने से कपडा पहना है या गिर गया है नहीं देखता। वैसे ज्ञान सिद्ध भी यह शरीर चल रहा है या समाप्त हो गया है नहीं देखता।

देहं चेति चकारेण गृहीतं सकलं जगत्।
तच्च कैमुतिकन्यायलभ्यं द्योतयतेऽपि च॥ ३५६॥

'देहं च' यहां चकार से पूरे विश्व का ग्रहण है। क्यों? कैमुतिकन्याय सूचक है वह।

बाह्यं सर्वमबुध्यंश्च देहं स्वं बुध्यते नरः।
देहस्यापि न बोधश्चेत् किमुतान्यस्य भण्यताम्॥ ३५७॥

बाहर दुनिया को न बूझे तो भी मनुष्य अपने शरीर को बूझता ही है। अपने शरीर को भी न बूझ रहा हो तो दूसरे के बूझने की बात ही क्या (यह कैमुतिक न्याय है)।

यदा देहं जगच्चैव ज्ञानसिद्धो न पश्यति।
तदाऽसज्जडदुःखात्मरूपेण कथमीक्ष्यताम्॥ ३५८॥

जब स्वशरीर और जगत् को भी सिद्ध पुरुष नहीं देखता तब शरीरादि के धर्म मिथ्यात्व जडत्व दुःखत्वादि को कैसे देखेगा?

नन्वस्मात् पूर्णतः पूर्णादाने शून्यमिदं भवेत्।
तथा सति पुमान् कोऽपि नेदमीक्षिष्यते जगत्॥ ३५९॥

पू. - अस्मात्-इदंकारास्पद पूर्ण से यदि पूर्ण का आदान करे तो शून्य हो जायेगा। तब कोई भी जगत् को देखेगा नहीं।

न हि वस्त्राद् गुणादाने वस्त्रं केनापि दृश्यते।
दृश्यते तु जगत् पूर्णाऽऽदातुरन्यैरशेषतः॥ ३६०॥

वस्त्र तन्तुपूर्ण है उन तन्तुओं को खींच लें तो कोई भी वस्त्र देख नहीं पायेगा। प्रकृत में जगत् ब्रह्मपूर्ण होने से उस पूर्ण ब्रह्म को हटा लेने पर भी हटानेवाले से अतिरिक्त सभी जगत् को देखते हैं।

मैवं स्थवीयान् दृष्टान्तो लोकानां तन्तुवाससोः।
रज्जुपन्नगदृष्टान्तं रोचयन्ते मनीषिणः॥ ३६१॥

उ. - पूर्वोक्त दोष नहीं है। तन्तु और वस्त्र का दृष्टान्त सामान्य लोगों को समझाने का स्थूल उदाहरण है। तन्तु से पूर्ण वस्त्र है। तन्तु स्वयं वस्त्र में पूर्ण है। उस वस्त्ररूपी पूर्ण से तन्तु को हटाये तो, तन्तु का आदान करे तो तन्तु ही रह जायेगा। वैसे आत्मपूर्ण जगत् से आत्मारूपी पूर्ण का आदान करे तो आत्मा ही रहेगा। यह सब को झट समझ में आता है। परंतु वेदान्तनिष्णात तो रज्जुसर्प दृष्टान्त को अधिक श्रेष्ठ मानते हैं। कल्पित सर्प में रज्जु ही भरी है वह रज्जु पूर्ण है। उस पूर्ण सर्प से रज्जु को हटा लें तो रज्जुरूपी पूर्ण ही बाकी बचेगा।

अत्राऽऽदानं पुना रज्जोः प्रत्यक्षावेक्षणं भवेत्।
रज्जुप्रत्यक्षणेऽसर्पा रज्जुरेवावशिष्यते॥ ३६२॥

इस दृष्टान्त के अनुसार आदान प्रत्यक्ष दर्शन ही है। सर्प में रज्जु को प्रत्यक्ष किया तो रज्जु ही अवशिष्ट रहेगी, सर्प गायब हो जायेगा।

एकस्य रज्जुप्रत्यक्षात् रज्जुमात्रावशेषणात्।
नैव सर्पतदाध्यक्ष्ये अन्येषां मुह्यतामुभे॥ ३६३॥

एक व्यक्ति रज्जु का प्रत्यक्ष करता है और रज्जुमात्र उस के लिये रह जाता है। न उस के लिये सर्प है और न सर्प प्रत्यक्ष है। किन्तु अन्य मुग्ध जो अज्ञानी हैं उन के लिये सर्प भी रहता है सर्प प्रत्यक्ष भी होता रहता है।

यथैव भुजगो रज्जा-वविद्वद्भिः प्रकल्पितः।
तथैव सकलं द्वैतं सति पूर्णे प्रकल्पितम्॥ ३६४॥

जैसे रज्जु में अविद्या से सर्प कल्पित है वैसे द्वैत पूर्ण ब्रह्म में कल्पित है।

रज्जुमात्रेक्षणं यद्वद् रज्ज्वादानं भुजङ्गमात्।
पूर्णमात्रेक्षणं तद्वत् पूर्णादानं च पूर्णतः॥ ३६५॥

सर्प में रज्जु का आदान (आच्छेदन) जैसे रज्जुमात्र दर्शन है वैसे पूर्ण जगत् से पूर्णादान पूर्णब्रह्ममात्रेक्षण है।

रज्ज्वादाने यथा सर्पो ह्यदृश्यः शून्यमात्रकः।
पूर्णादाने तथा विश्वमदृश्यं शून्यमेव वा॥ ३६६॥

रज्जु का आदान होने पर सर्प अदृश्य वा शून्य हो जाता है वैसे पूर्ण ब्रह्म का आदान होने पर जगत् भी अदृश्य वा शून्य हो जाता है।

एकेन रज्ज्वादानेपि सर्पोऽन्येन यथेक्ष्यते।
एकेन पूर्णादानेऽपि जगदन्येन वीक्ष्यते॥ ३६७॥

एक ने रज्जु का आदान किया तो भी दूसरा सर्प को देखता है वैसे एक ने पूर्ण का आदान किया तो भी दूसरा जगत् को देखेगा।

ननु पूर्णेक्षणान्नष्टं जगदेकस्य चेत्तदा।
अनष्टं कथमन्यस्य कथमन्येन वीक्ष्यताम्॥ ३६८॥
देवदत्तस्य पुत्रौ द्वौ चैत्रमैत्रौ सहोदरौ।
मृतः पिता तु चैत्रस्य न मैत्रस्येति भो कथम्॥ ३६९॥

पू. - पूर्णेक्षणरूपी पूर्णादान से पूर्णमात्र रह जाता है, जगत् समास होता है जो पूर्णदर्शी है उसके लिये नष्ट होता है जो पूर्णदर्शी नहीं है उसके लिये नष्ट नहीं होता यह विलक्षण बात है। देवदत्त के दो पुत्र हैं दोनो सहोदर है। एक के लिये पिता मर गया दूसरे के लिये जिंदा है ऐसा कहीं देखा है?

उच्यते पन्नगो रज्जौ स्वस्वाज्ञानविनिर्मितः।
पृथक् पृथगतो नैकज्ञानादन्यस्य नश्यति॥ ३७०॥
एवं जगदिदं सर्वं स्वस्वाज्ञानविनिर्मितम्।
पृथक् पृथगतो नैकज्ञानादन्यस्य नश्यति॥ ३७१॥

उ. - सुनो चार आदमियों को रज्जु में सर्प दिखा। अपने-अपने अज्ञान से उत्पादित सर्प है। एक को रज्जु ज्ञान हो गया तो उसी का सर्प समाप्त होता है सब का नहीं। इसी प्रकार संसार भी आपना-अपना अलग-अलग कल्पित है। एक को बोध हो गया तो उसी का संसार नष्ट होगा। दूसरे का नहीं।

**घटादिकं जगत्सर्वं सर्वेषां चेत् पृथक् पृथक्।**
**त्वया दृष्टो घटो दृष्टो मयापीति कथं भवेत्॥ ३७२॥**
**न च वाच्यं त्वया दृष्टः सर्पो दृष्टो मयापि च।**
**इतिवत् स्यादिति यतो रज्जुरेकैव तत्र यत्॥ ३७३॥**
**यदि चात्राप्यधिष्ठानं ब्रह्मैकमनुभाषसे।**
**भिन्नेष्वपि घटेष्वेवं प्रत्यभिज्ञा भवेत्तव॥ ३७४॥**

पू. - घटादि जगत् सब का अलग-अलग है तो तुमने जो घट देखा वही मैंने भी देखा यह प्रत्यभिज्ञा कैसे होगी? यह कहें कि रज्जु में भिन्न-भिन्न व्यक्ति के लिये सर्प भिन्न होने पर भी जैसे कहते हैं-तुमने जो सर्प देखा उसे मैंने भी देखा वैसे यहां भी होगा तो नाना घटों में अलग-अलग घडे को देखने पर भी तुमने जो घट देखा वही मैंने भी देखा बोलने लगेंगे। क्योंकि घटाधिष्टान ब्रह्म एक है।

**उच्यते ज्ञातृभेदेन प्रत्यभिज्ञा कदाचन।**
**ऐक्यधीपरिभाषा चेत्तस्यामेतद्विचार्यते॥ ३७५॥**

उ. - ज्ञाता भिन्न होने पर प्रत्यभिज्ञा ज्ञान नहीं माना जाता। सोऽयं देवदत्तः यहां पूर्व पर ज्ञान ज्ञाता एक है वह प्रत्यभिज्ञा प्रमाण है। तुमने जो देखा वही मैं देख रहा हूं यहां पर ज्ञाता भिन्न हो रहे है। यदि ऐक्यज्ञान में पारिभाषिक शब्द प्रत्यभिज्ञा आप कहते हैं तो वह यथावत् प्रमाण नहीं होगा। फिर भी पारिभाषिक प्रत्यभिज्ञा लेकर हम विचार थोड़ा कर ही लेते हैं।

**स्पष्टभेदग्रहाभावे क्वचिज्जायत ऐक्यधीः।**
**अनुमानादितश्चापि क्वचिदैक्यमतिर्भवेत्॥ ३७६॥**
**श्रूयमाणस्त्वया शब्दो मयापि श्रूयतेऽत्र हि।**
**शब्दाच्छन्दान्तरोत्पत्तौ भिन्नौ कर्णद्वये रवौ॥ ३७७॥**

यूथीगन्धस्त्वयाऽऽघ्रातो मयाप्याघ्रायते शुभः।
नासिकागतगन्धानां भिन्नत्वं सर्वसम्मतम्॥ ३७८॥
वस्तुच्छायैव नयनाऽऽगता दर्शनगोचरा।
इति वैज्ञानिकमते नैक्यं दृश्यस्य विद्यते॥ ३७९॥
यत्ते तदेव मम च काशीमुद्रितपुस्तकम्।
इत्यैक्यं स्पष्टभेदेऽपि प्रत्ययव्यवहारयोः॥ ३८०॥

स्पष्ट भेद ग्रहण न होने पर कहीं ऐक्य ज्ञान होता है। कहीं अनुमानादि अंदाज आदि से ऐक्य ज्ञान होता है। तुम जो शब्द सुन रहे हो उसे मैं भी सुन रहा हूं। शब्द से शब्दान्तरोत्पत्ति माननेवालों के मत में भिन्न कर्णों में उत्पन्न शब्द भिन्न हैं। जुही की सुगन्धि जो तुमने सूंघी वही मैं भी सूंघ रहा हूं। गन्ध या गन्धाणु नाम में पहुंचनेवाले अलग-अलग है। वस्तुच्छाया नेत्र में आती है वही प्रत्यक्ष विषय है इस वैज्ञानिक मत में भिन्न-भिन्न ही छाया नयनों में आती है। तुम्हारे पास काशी में मुद्रित जो उपनिषत् पुस्तक है वही मेरे पास भी है ऐसा समझते और बोलते हैं तब कि दोनों के पास दो पुस्तक अलग-अलग है।

एवंविधैक्यमतितो नैवैक्यं सेद्धुर्महति।
कल्पनाभेदेतस्तज्जं भिन्नं भिन्नं जगत्ततः॥ ३८१॥

ऐसी ऐसी ऐक्य बुद्धि से किसी के मत में वस्तु-ऐक्य सिद्ध नहीं होता। अतः तत्तत्पुरुष कल्पित जगत् भी कल्पना भेद से भिन्न-भिन्न ही है।

एकस्य पूर्णसम्बोधात्तस्य जाते जगल्लये।
तिष्ठत्येव जगत्सर्व-मज्ञानां स्वस्वकल्पितम्॥ ३८२॥

एक ज्ञानी को पूर्ण ब्रह्म बोध होने से उस पूर्णमात्रावशेष होने के कारण जगत्-लय हो जाये तो भी दूसरों के स्व-स्व कल्पित जगत् रहेगा ही।

अज्ञाः पश्यन्तु भूच्छिद्रसर्पमालाद्यनेकशः।
किं रज्जुदर्शिनस्तेन किं पुनः पूर्णदर्शिनः॥ ३८३॥

अज्ञानी भूमि विवर, सर्प, माला आदि अनेक वस्तु भले देखें। उस यथार्थ रज्जुदर्शी के लिये क्या होनेवाला है, अनेक कहां से आनेवाला है।

वैसे पूर्णतत्त्वदर्शी के लिये भी पूर्णातिरिक्त क्या आनेवाला है। उसके लिये पूर्णब्रह्म ही अवशिष्ट रहेगा।

वाससस्तन्तुवत् पूर्णं शक्यादानं न संसृतेः।
अनंशत्वात् पर महेः रज्जुवत्स्यात् प्रबोधतः॥ ३८४॥
पूर्णादाने ननु कथं पूर्णमेवावशिष्यते.।
पूर्णादानं पूर्णबोधो मनोऽप्यत्रावशिष्यते॥ ३८५॥
विना मनो न भवति बोधो दर्शनलक्षणः।
श्रुतिश्च मनसैवानुद्रष्टव्यमिति भाषते॥ ३८६॥
मनोऽभावे कथं दृष्टिस्तत्सत्त्वे पूर्णता कथम्।
अवश्यं मनसा वस्तुपरिच्छेदो भविष्यति॥ ३८७॥

कार्यात्मक पूर्ण से कारणात्मक पूर्ण का आदान कपड़े से तन्तु को खींच लेने के समान नहीं है। क्योंकि वह परिणामी कारण नहीं है। विवर्तकारण है। सर्प से रस्सी को लेने का अर्थ है रस्सी को जानना-पहचानना। इसी प्रकार पूर्णब्रह्म को जानना ही पूर्णादान है। तब केवल पूर्णमात्र कैसे अवशिष्ट होगा? मन भी तो रहेगा। 'मनसैवानुद्रष्टव्यं' इस श्रुति से पूर्णदर्शन मन से ही होगा। तब मन के बिना दर्शन कैसे हो। यदि मन है तो मन से ही वस्तु परिच्छेद आयेगा। तब पूर्णत्व नहीं रहेगा।

दर्शनं स्वप्रकाशत्वाद् भवेदिति न सांप्रतम्।
अनादितः स्वप्रभत्वेन भवाभावप्रसङ्गतः॥ ३८८॥
अखण्डाकारवृत्तिर्हि ततः स्यात्पूर्णदर्शनम्।
तदेव पूर्णादानं च मानसी वृत्तिरेव सा॥ ३८९॥

मन के न होने पर भी स्वयंप्रकाश होने से आत्मदर्शन (पूर्ण दर्शन) हो जायेगा ऐसा कहना भी संगत नहीं है। क्योंकि अनादिकाल से आत्मा स्वयंप्रकाश है। तब अनादिकाल से आत्मदर्शन हो जाने से संसार आज तक रहता ही नहीं। अतः पूर्णात्मदर्शन अखण्डाकार वृत्ति को लेकर ही स्वीकार करना है। वह तो मानस वृत्ति ही है।

सत्यं ज्ञानसमुत्पतिक्षणेऽज्ञानं विनश्यति।
तदैवच मनोऽज्ञानकार्यं विलयमाप्नुयात्॥ ३९०॥
न च तर्ह्याश्रयाभावाद् वृत्तिश्च लयमाप्नुयात्।
वृत्त्यात्मकज्ञानविरहान्नाज्ञानमनसोर्लयः ॥ ३९१॥
इति वाच्यं विनाऽधारं वृत्तिः सा तिष्ठति क्षणम्।
अस्तु वा मनसः सत्त्वं क्षणं किं तेन हीयते॥ ३९२॥
न चाज्ञानं च तर्ह्यस्तु, ज्ञानाज्ञानविरोधतः।
न हि प्रकाशतमसी युगपत् क्वपि तिष्ठतः॥ ३९३॥

बात यथार्थ है। ज्ञानोत्पत्तिक्षण में अज्ञान तथा तत्कार्य मन दोनों लीन होंगे। तब मन न होने से वृत्ति भी नहीं होगी। वृत्ति के न होने से अज्ञान और मन दोनों का लय भी नहीं होगा। नहीं। अज्ञान और मन के न होने पर भी वृत्ति क्षणभर के लिये उत्पन्न होकर रहेगी। बिना आधार ही रहेगी। अथवा वृत्तिज्ञान से अज्ञान नाश होगा। क्योंकि ज्ञान और अज्ञान का विरोध है जैसे प्रकाश और अन्धकार एकत्र एक क्षण में नहीं रहते। मन के साथ विरोध न होने से मन तथा वृत्ति दोनों क्षणभर के लिये रहेंगे।

नन्वज्ञानमुपादानं कथं तेन विना मनः।
तद्वृत्तिश्चावतिष्ठेतां कथं नाशस्तयोः पुनः॥ ३९४॥

पू. - अज्ञान उपादान कारण है उसके बिना मन और मनोवृत्ति दोनों कैसे रहेंगे? तन्तु के बिना पट और पटरूप कैसे रहेंगे? और रह गये तो उन का नाशक कौन होगा? यदि कोई नया नाशक आया तो पूर्णात्मावशेष नहीं रहेगा।

शृणु तन्तुविनाशेन पटनाशः सतां मतः।
तन्तुनाशः कारणं स्यात्पटनाशस्त्वनन्तरम्॥ ३९५॥
तन्तुनाशक्षणे तर्हि पटोऽस्तीति तदाऽऽगतम्।
कथं तदाश्रयाभावान्नैयायिकविपश्चिताम्॥ ३९६॥

सुनो। तन्तुनाश से पटनाश होता है ऐसा नैयायिक मानते है। मतलब तन्तुनाश कारण प्रथम क्षण में होगा तो द्वितीय क्षण में कार्य पट का नाश

होगा। अर्थात् प्रथम क्षण में पट रहेगा। जब तन्तुनाश हुआ तब आश्रय तन्तु के बिना पट कैसे रह गया? जवाब नैयायिक दें।

**प्रमाणविरहेऽप्येवं तर्केणावोचि तार्किकैः।**
**कार्यकारणभावो हि तर्कस्तेषां मते स्थितः॥३९७॥**

नैयायिकों के पास कोई ठोस प्रमाण नहीं है। फिर भी तर्क के बल पर उन्हों ने यह माना। कारण कार्य से पूर्व होता है यहीं उन का तर्क है।

**वयं श्रुतिप्रमाणेन तर्केणाप्यभिदध्महे।**
**श्रूयते पूर्णमादाय पूर्णमेवावशिष्यते॥३९८॥**
**ल्यबादिः पूर्वकालीनक्रियार्थाद्धातुतः स्मृतः।**
**पूर्णादानोत्तरमतः सिध्येत् पूर्णविशेषणम्॥३९९॥**

हम तो श्रुतिप्रमाण और तर्क दोनों से कह रहे है। श्रुति है - पूर्णमादाय पूर्णमवशिष्यते। 'समानकर्तृकयोः पूर्वकालेक्त्वा', 'सामसेऽनञ् पूर्वेक्त्वोल्यप्' ऐसे पाणिनीय सूत्र है। 'पूर्णादानोत्तरकालीनावशेषाश्रयः पूर्ण' ऐसा शाब्दबोध होगा। अर्थात् पूर्णादान पूर्वकाल में होता है, उत्तरकाल में पूर्णावशेषण। प्रथम साक्षात्काररूप पूर्णादान होगा। उत्तर कल्पित सर्व की निवृत्ति से पूर्णावशेषण होगा। यह श्रुति और तर्क को मिलाये बिना तो प्रथम क्षण पूर्णावबोध होगा। द्वितीय क्षण में अज्ञान, मन एवं वृत्तिरूप स्वयं की और पूर्णेत्तर कल्पित जगत् की निवृत्ति एक साथ हो जाती है। एवकार से इतना अर्थ सामने आता है। पूर्णेतरानवशेषण तथा पूर्णावशेषण एवार्थ है।

**समानकर्तृकत्वे हि जगौ क्त्वाप्रत्ययं मुनिः।**
**मात्रावशेषणादानक्रियाकर्त्रैक्यमीक्ष्यते ॥४००॥**
**पूर्णस्य जगतः पूर्णमादधादेष साधकः।**
**ब्रह्मावशिष्यते तत्र कर्तृ ब्रह्म न साधकः॥४०१॥**

पाणिनि मुनि ने दो क्रियाओं की एक कर्ता हो तब पूर्वकालीन क्रियावाचक धातु से क्त्वा-ल्यप् आदि का विधान किया है। यहां आदान क्रिया और अवशेषण क्रिया दो हैं। आदान क्रिया मुमुक्षु साधक की है,

अवशेषण क्रिया ब्रह्म की है।

**सत्यं साधकसाध्यौ स्तामबुद्धानां हि भिन्नवत्।**
**बोधे त्वादाय पूर्णं हि नैव भेदोऽवतिष्ठते॥४०२॥**

बात सत्य है। अज्ञानियों के लिये साधक और साध्य भिन्न है। बोध होने पर पूर्ण से स्वयं पूर्ण समझनेवाला वही आदानकर्ता एवं अवशेषाश्रय होता है। अतः कर्तृ (पारिभाषिक) भेद नहीं रहता।

**यः पूर्णमद इत्यादे - र्भाष्येऽर्थः संप्रदर्शितः।**
**व्याख्यां तदानुकूल्येन संप्रति प्रस्तुमो वयम्॥४०३॥**

पूर्णमद इत्यादि मन्त्र का जो अर्थ भाष्य में सम्यक् दिखाया है उस के अनुकूल व्याख्या अब हम प्रस्तुत करते हैं।

**ब्रह्म वा इदमग्रेऽभूत् तदात्मानमवैत् स्वयम्।**
**अहं ब्रह्मास्मि तस्मात्त-दभूत् सर्वमिति श्रुतिः॥४०४॥**

'ब्रह्म वा इदमग्र आसीत्तदात्मामेवावेदहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवत्' ऐसी बृहदारण्यक श्रुति है।

**पूर्णमित्यादिमन्त्रस्य स एवार्थो विवक्षितः।**
**ब्रह्म पूर्णमदोऽथेदं नामरूपाद्युपाधिकम्॥४०५॥**

ब्रह्म वा इदमग्रे इत्यादि श्रुति का जो अर्थ है वही पूर्णमदः इत्यादि मन्त्र का है। 'ब्रह्म' का अर्थ है - पूर्णमदः। ब्राह्मण वाक्य में जो 'इदं' शब्द आया उसका अर्थ है - पूर्णमिदम्। इदं माने नामरूपोधिवाला।

**एतदुक्तं परं ब्रह्म ब्रह्मशब्देन भण्यते।**
**इदं शब्देन जीवश्च नामरूपाद्युपाधिकः॥४०६॥**

यूं समझिये - ब्रह्मैवेदमग्रआसीत् में ब्रह्म शब्द का परब्रह्म अर्थ है। इदं शब्द का नामरूपोपाधिक जीव अर्थ है।

**सृष्टेः प्राक्खल्वयं जीवो ब्रह्मैवाभून्न चापरः।**
**मन्त्रे प्रथमपादस्या-प्ययमर्थोऽवसीयते॥४०७॥**

ब्रह्मैवेदमग्रआसीत् का वाक्यार्थ है - यह जीव सृष्टि से पहले ब्रह्म ही था अन्य नहीं यही अर्थ पूर्णमदः मन्त्र के प्रथम पाद का भी

प्रतीत होता है।

यदेवेह तदमुत्र यदमुत्र तदन्विह।
इति श्रुतावयं ह्यर्थो भवति प्रतिपादितः॥४०८॥
अत्रेहेतीदमोरूप - ममुत्रेत्यदसस्तथा।
कार्योपाधाविह हि यच्चैतन्यं जीवसंज्ञितम्॥४०९॥
तदेव कारणोपाधौ ब्रह्म स्वात्मनि वा स्थितम्।
यदमुत्रात्मगं ब्रह्म स जीवः सृष्टिमन्विह॥४१०॥
अदः पूर्णमिदं पूर्णमित्यनेनैतदीरितम्।
तद्ब्रह्म वा इदं ह्यग्र इत्यनेनापि वर्णितिम्॥४११॥

'यदेवेह तदमुत्र' यहां इह पद इदं का रूप है। अमुत्र यह अदः का रूप है। इह=इस शरीररूपी कार्योपाधि में जो चैतन्य जीवात्मक है वही अमुत्र=कारणोपाधि में या अपने आप में स्थित ब्रह्म है। और वह जो ब्रह्म है वही इस कार्योपाधि में है। अदः पूर्णम् इदं पूर्णं इस में यही बात कही गयी है। ब्रह्म वा इदमग्रआसीत् इस वाक्य में भी है। (मतलब-इदं पद सुनकर झुंझलाना नहीं कि सर्वत्र सदेवेदमग्रआसीत् इत्यादि में जगत अर्थ है। यहां जीव अर्थ कैसे किया? क्योंकि इदं पद का अन्यत्र जीव में पर्यवसायिता देखी जाती है।)

पूर्णस्य पूर्णमादाये-त्यहं ब्रह्मेत्यवेत्य च।
स सर्वमभवन्नाम पूर्णमेवावशिष्यते॥४१२॥

'पूर्णस्य पूर्णमादाय' का अर्थ है-अहं ब्रह्मास्मि जानकर और तत्सर्वमभवत् का अर्थ है-पूर्णमेवावशिष्यते।

पुनः संक्षिप्य कथयाम्यर्थोपप्लवहानये।
सर्ववेदान्तसारार्थ - संग्रहात्मत्वतो मनोः॥४१३॥
परं पूर्णमदोब्रह्म निरुपाधि स्वयंप्रभम्।
कार्यं जीवात्मकं चेदं पूर्णं वस्तुस्वरूपतः॥४१४॥
स्वरूपं परमात्मैव जीवस्याप्यस्य वस्तुतः।
परमात्मस्वरूपेण पूर्णं तज्जीवसंज्ञितम्॥४१५॥

पूर्णादुदच्यमानं हि पूर्णमेव स्वरूपतः।
घटव्योम यथाव्योम्न उद्धृतं व्यापि वस्तुतः॥४१६॥
तस्य पूर्णत्वमुद्धृत्यादाय मोहान्धकूपतः।
अखण्डं सच्चिदानन्दं पूर्णमेवावशिष्यते॥४१७॥

कन्फ्यूजन न हो एतदर्थ पुनः कहता हूं। अदःपूर्ण ब्रह्म है। इदं पूर्ण जीव है कयोंकि पूर्ण ब्रह्म से उद्धृत हुआ जीव वस्तुतः ब्रह्म ही है ना? जैसे व्यापक आकाश से उद्धृत घटाकाश वस्तुतः महाकाश ही तो है। उस जीव का पूर्ण अज्ञानकूप से उठा लेते हैं तो पूर्ण ब्रह्म ही अवशिष्ट रहता है। अब ब्रह्मैवेदमग्रआसीत् इत्यादि का अर्थ देखो।

इदमर्थः श्रुतौ जीवो नामरूपाद्युपाधिकः।
ब्रह्मैवाग्रेऽभवत्सोऽय-मविद्याकामकर्मयुक्॥४१८॥

श्रुत्युक्त नामरूपोपाधिक इदमर्थ जीव जो अविद्या कामादियुक्त है पहले (सृष्टि से पूर्व) ब्रह्म ही था।

ननु ब्रह्मैव पूर्वं चेत् कथं तत्समजायत।
अजमेव श्रुतं ब्रह्म श्रुतिषु, स्मृतिषु स्मृतम्॥४१९॥

पू. - यदि ब्रह्म ही अकेला पहले था तो वह उत्पन्न होकर जीव कैसे हुआ। श्रुति स्मृति आदि में ब्रह्म को अजन्मा बताया है।

न च देहं विना जीवोऽप्यासीद् देहं धरन् पुनः।
उच्यते जायत इति सन्नजोपीति सांप्रतम्॥४२०॥
ब्रह्मैवेत्येवकारार्थः कथं तर्ह्युपपद्यताम्।
जीवा अप्यभवंस्तर्हि नानेति हि समागतम्॥४२१॥
अत्रोच्यतेऽस्त्यनिर्वाच्या मायाऽविद्यादिशब्दिता।
तया जन्मलयादीनां भवेद् ब्रह्मणि कल्पना॥४२२॥
न च सैव द्वितीयैवमेवकारविरोधिनी।
यतो न ब्रह्मतो भिन्ना नाभिन्ना नोभयात्मिका॥४२३॥
न सती नासती नोभ-यात्मिकाऽस्तीति चोच्यते।
तत्कार्यमपि निर्वक्तुं न शक्यं तन्मृषैव सा॥४२४॥

यह कहें कि प्रलय में बिना देह के सभी जीव भी थे। सृष्टि में देहधारण होने पर 'जनमा' ऐसा कहा जाता है। नहीं। तब 'ब्रह्मैवासीत्' यहां एवकार अनुपपन्न होगा। जीव भी अनेक थे ही। उ. - उत्तर सुनो। अनिर्वचनीय माया से ब्रह्म में जन्मलयादि कल्पना होती है। वही माया प्रलय में रही तो 'ब्रह्मैव' यह एवकार असंगत होगा। नहीं। वह ब्रह्म से भिन्न.नहीं है। तथा अभिन्न नहीं, भिन्नाभिन्न भी नहीं। सती या असती या सदसती भी नहीं। वह अनिर्वचनीय है। उसका कार्य जगत भी अनिर्वचनीय है। मिथ्या है। अतः द्वैत नहीं है।

**निर्वक्तुं न त्वया शक्यं किं तेनाऽऽगोऽस्ति वस्तुनः।**
**भिन्नमेव सदेवेति निर्वच्यो व्यवहारतः॥४२५॥**

आप निवर्चन नहीं कर सकते हैं तो यह वस्तु का अपराध थोडा ही है? हम यही कहेंगे ब्रह्म से भिन्न जगत है। वह सत् ही है। यही निर्वचन है। व्यवहार देखने में आ रहा है। व्यवहार से जगत चल रहा है वह द्वैत में ही संभव है।

**ब्रह्मभेदो जगति यः स भिन्नोऽभिन्न एव वा।**
**भिन्नेऽनवस्थाऽभिन्ने च ब्रह्मैव जगदागतम्॥४२६॥**

सुनिये - जगत मे जो ब्रह्म का भेद है वह भेद ब्रह्म से भिन्न है या अभिन्न? यदि भिन्न है तो बीच में एक भेद और आ गया। वह भेद ब्रह्म से भिन्न है या अभिन्न यह प्रश्न उठेगा। और अनवस्था में पर्यवसान होगा। यदि ब्रह्म से अभिन्न है तो ब्रह्म ही हुआ? भेद से अभिन्न उसी युक्ति से जगत को मानना पडेगा। तब ब्रह्मरूपी भेद से अभिन्न जगत ब्रह्म ही हुआ।

**भेदोऽस्ति व्यवहाराणामन्यथानुपपत्तितः।**
**इति चेत् को हि नेत्याह मृषा तमभिदध्महे॥४२७॥**

व्यवहार की अन्यथानुपपत्ति से भेद है कहो तो ना किसने कहा? उस भेद को हम मिथ्या बोलते हैं। असत् और मिथ्या पर्यायवाची नहीं है।

**दृष्टा कर्गलखण्डेषु रूप्यव्यवहृतिः सताम्।**
**राज्ञा निरस्तमूल्यं च कर्गलं कर्गलं स्थितम्॥४२८॥**

अभूतां प्रथमं येन भूम्यादिक्रयविक्रयौ।
तदेवाद्य पथि क्षिप्तं नेक्षितुं कोऽपि काङ्क्षति॥४२९॥
तस्माद् व्यवहृतिर्नैव भवेत् सत्यत्वसाधिका।
स्वप्ने व्यवहृतिर्दृष्टा तद्वदेव च जाग्रतः॥४३०॥

कागज के टुकडों में रूप्य (चांदी को रूप्य कहते हैं) रुपये का व्यवहार करते हैं। सरकार ने नोट केन्सल किया तो कागज कागज ही रह जाता है। जिस से प्रथम जमीन जायदाद वस्तुओं का क्रय-विक्रय होता था, केन्सल होने पर रास्ते में हजार का नोट पडा तो भी कोई उठाने में उत्सुक नहीं होता। अतः व्यवहार के लिये वस्तु की सत्यता आवश्यक नहीं है। स्वप्न में भी व्यवहार होता है। बिना वस्तुसत्यता नहीं।

ये तु गर्वमखर्वं तु दधुर्निर्वचने जनाः।
खण्डिताः खण्डनेऽद्वैत-परिशुद्धौ च शोधिताः॥४३१॥

जो निर्वचन करने में गर्व रखते हैं उनका खण्डन खण्डनखण्डखाध में किया है और अद्वैत परिशुद्धि में शोधन भी कर लिया है।

न च ब्रह्मापि नो सिद्ध्येत् स्वयंसिद्धं हि तद्यतः।
तन्निष्ठस्यैव मोक्षं चोपदिशत्यम्बिका श्रुतिः॥४३२॥

ऐसा फिर ब्रह्म भी सिद्ध नहीं किया जा सकेगा। न हो। वह स्वयं सिद्ध है। तन्निष्ठ को ही मोक्ष श्रुति बताती है।

विज्ञेयमिदमप्यत्र महावाक्यार्थ एव च।
सर्ववेदरहस्यार्थो मन्त्रेणानेन दर्शितः॥४३३॥

यह बात भी यहां जानना आवश्यक है महावाक्यार्थ भी, जो सर्व वेद रहस्यार्थ है इस मन्त्र से दिखाया गया है।

अदस्तत्पदवाच्यार्थ-स्त्वंवाच्यार्थो भवेदिदम्।
लक्ष्यार्थः पूर्णशब्दाभ्या-मुभयत्र प्रदर्शितः॥४३४॥

'अदः' यह तत्पदवाच्यार्थ अर्थात् तत्पदवाच्यार्थबोधक है। तथा 'इदं' यह त्वंपदवाच्यार्थ है। दोनों के साथ में आया हुआ पूर्ण शब्द दोनों का लक्ष्यार्थ बोधनार्थ है।

**अदसो विप्रकृष्टार्थः संनिकृष्टस्तथेदमः।**
**तौ पूर्णशब्दसांनिध्याज्ज्ञायेते चेतनावपि॥४३५॥**

अदः का विप्रकृष्ट अर्थ है और इदम् का संनिकृष्ट अर्थ है।

**इदमस्तु संनिकृष्टं समीपतरवर्त्ति चैतदो रूपम्।**
**अदसस्तु विप्रकृष्टं तदिति परोक्षं विजानीयात्॥४३६॥**

ऐसी कहीं की कारिका है। पूर्ण शब्द पर पूरा विचार करने से पूर्व ही चैतन्य उपस्थित होता है। उसके सांनिध्य से अदः शब्द का अर्थ और इदं शब्द का अर्थ चेतनत्वेन रूपेण उपस्थित होता है।

**न स वाच्यार्थ इति चेत् सर्वनाम्नी हि ते तयोः।**
**बुद्धिगोचरधर्मावच्छिन्ने शक्तिर्मता यतः॥४३७॥**

अन्य शब्द सांनिध्य से प्राप्त अर्थ वाच्यार्थ नहीं होगा। ऐसी शंका अस्थाने है। क्योंकि दोनों सर्व नाम है। अतः बुद्धिविषयतावच्छेदक धर्मावच्छिन्न में शक्ति होती है।

**वेदे वक्तुरभावेऽपि शब्दसामान्यकल्पिताम्।**
**बुद्धि मीमांसयाऽऽदाय क्रियते शक्तिनिर्णयः॥४३८॥**
**सा पूर्णशब्दसांनिध्यात् स्यात्सचैतन्यगोचरा।**
**लभ्येते दर्शितावर्थौ तेनेदमदसोरिति॥४३९॥**

वेद में वक्ता के न होने पर भी लोक वेद सामान्य शब्दावली होने से मीमांसानुसार वैसी बुद्धि की कल्पना कर शक्ति निर्णय किया जाता है। तब पूर्ण शब्द सांनिध्य से विप्रकृष्ट एवं संनिकृष्ट चैतन्य अर्थ अदः और इदं से लभ्य होंगे।

**न हि क्रतुवसिष्ठादि चैतन्यानुगतिस्ततः।**
**सृष्टिपूर्वेशचैतन्यमेकं सदसतः पदम्॥४४०॥**

व्यास, क्रतु, वसिष्ठादि चैतन्य अननुगत होने से सृष्टि पूर्व जो एकमेवाद्वितीय सत् चैतन्य है वही अदः शब्द का आस्पद होगा।

**आसीदग्रे सदेवैकं ब्रह्मैवाग्रेऽभवत् परम्।**
**इत्याद्यर्थानुसन्धानादप्यदः पदमीश्वरः॥४४१॥**

सृष्टि से पूर्व सत ही एक था ब्रह्म ही था इत्यादि वाक्यार्थानुसन्धान से भी अदः पद का ब्रह्म अर्थ निकलता है।

सविशेषेणशब्दो हि संकुचद्वृत्तिको भवेत्।
निर्विशेषणशब्दस्तु स्वार्थव्याप्यार्थवृत्तिकः॥ ४४२॥
कान्यकुब्जेश्वर इति व्यावृत्त इतरेश्वरात्।
किन्त्वीश्वर इति प्रोक्तो भवेत् सर्वेश्वरो हरः॥ ४४३॥
निर्विशेषणमत्रोक्तं विप्रकृष्टार्थकं ततः।
तत् सर्वविप्रकृष्टार्थबोधकं जायते पदम्॥ ४४४॥
सृष्टौ यावत्पदार्थाः स्युर्विप्रकृष्टं ततः खलु।
तत् पूर्वस्थं परं ब्रह्म जगतः सृष्टिकारणम्॥ ४४५॥

सविशेषण शब्द संकुचितार्थक होगा। जैसे कान्यकुब्जेश्वर कहने पर इतर भद्रेश्वर दिल्लीश्वरादि से पृथक् संकुचित होगा। ईश्वर इतना कहते हैं तो 'ईश्वरः सर्व ईशानः' में बताया सर्वेश्वर हर अर्थ होगा। 'अदः' यह विर्विशेषण है। अतः सर्व विप्रकृष्ट अर्थ होगा। इन्द्रौऽसौ कुबेरोऽसौ इत्यादि के समान संकुचित नहीं। सर्व से सृष्टिस्थ सर्व आयेंगे। उस में विप्रकृष्ट तो सृष्टि पूर्वस्थ परमात्मा ही है जो अद्वितीय होने से सर्वसृष्टिकारण है।

अन्यस्य विरहादेव सृष्टेस्तद्ध्येव कारणम्।
यः सर्वज्ञः सर्वविच्च सर्वशक्तिश्च सिध्यति॥ ४४६॥

सृष्टि हुई है। अतः सृष्टि का कारण अवश्य कोई होगा। सर्व विप्रकृष्ट होने से अन्य कोई है नहीं। अतः सर्वविप्रकृष्ट वही जगत कारण है अतएव उसे सर्वज्ञ सर्वावित् सर्वशक्ति मानना ही होगा। यही यः सर्वज्ञ सर्ववित् इत्यादि श्रुतियों में बताया।

एतदाहेशचैतन्यं सर्वकर्त्र्यप्यलौकिकम्।
विप्रकृष्टतमं सर्व-प्राग्भावित्वाददः पदम्॥ ४४७॥

सारार्थ यह है कि सर्व कर्ता होने पर भी जो अलौकिक (लोक दृष्टिगोचर नहीं) ऐसा ईश्वर चैतन्यं जो समस्त कार्य प्रपञ्च से पहलेवाला होने से विप्रकृष्टतम है वही अदः शब्द से बोध्य है।

संनिकृष्टार्थकमिद - मविशेषणमत्र च।
संनिकृष्टतमं यत्तद् बोधयेद्वस्तु पूर्ववत्॥ ४४८॥

पूर्णमिदं में इदं पद का संनिकृष्ट अर्थ है। और यहां भी विशेषण न होने से संनिकृष्टतम अर्थ होगा।

सर्वेषामपि चात्मैव संनिकृष्टतमो निजः।
तच्चैतन्यं पूर्णशब्द-साहित्यान्न पूनर्वपुः॥ ४४९॥

सब के लिये संनिकृष्टतम तो आत्मा ही है। पूर्ण शब्द साहचर्य से चैतन्य है। देह नहीं।

बन्धुरात्मात्मनस्तस्येत्यादौ तु वपुरादिकम्।
यद्यप्यर्थोऽस्त्यचैतन्यन्न ग्राह्यमिह तत् ततः॥ ४५०॥

बन्धुरात्मात्मनस्तस्य इत्यादि में मन शरीरादि भी आत्मा भी आत्मा है तथापि अचेतन होने से यहां इदं पदार्थ नहीं है।

अहमित्येव किं नोक्तमिति चेन्नर्षिणोच्यते।
मा ग्राह्यर्थः स इत्यस्यादिदमित्येव चोदितम्॥ ४५१॥

यदि आत्मा ही लेना था तो 'पूर्णमदः पूर्णमहं' ऐसा क्यों नहीं कहा? अरे यह मन्त्र ऋषि बोल रहे हैं। वही ऋषि अहं पद से लेने न लग जाये इसलिये इदं कहा।

समीतरवर्त्येतत् पदं प्रायोजि नो कुतः।
असंनिकृष्टं मा ग्राहि समीपतरमेव तु॥ ४५२॥

अधिक समीप अर्थ के लिये एतत्पद का प्रयोग करते, समीपतरवर्त्ति चैतदो रूपम्। नहीं। असंनिकृष्ट भी समीपतर हो सकता है।

संनिकर्षस्तु संयोग-तादात्म्यादिरुदीर्यते।
संनिकृष्टतरस्तेन चात्मैवायाति चेतनः॥ ४५३॥

समीप एवं संनिकृष्ट समानार्थक नहीं है। संयोग तादात्म्य इत्यादि संनिकर्ष है उससे संनिकृष्टतम आत्मा ही है।

स्वानुभूत्यास्पदं दृश्यं परिच्छिन्नमिदंपदम्।
अल्पज्ञमल्पशक्त्यल्प-चैतन्यं कार्यलक्षणम्॥ ४५४॥

इदं वह है जो दृश्य है, स्वानुभव विषय है, परिच्छिन्न है वही इदं शब्द का अर्थ है। वह अल्पज्ञ अल्प शक्ति, अल्प चैतन्य, उपाधि विशिष्टरूप से कार्यात्मक भी है।

इत्येवं हीदमदसोः शक्यार्थौ सद्भिरीक्षितौ।
लक्ष्यार्थं पूर्णमेवाह शब्दाभ्यां च स्वयं श्रुतिः॥४५५॥

इस प्रकार इदं और अदः का शक्यार्थ मनीषियों ने देखा। लक्ष्यार्थ क्या है यह स्वयं श्रुति पूर्णं पूर्णं ऐसे दो बार कहकर दोनों का दरसाया।

अदः पूर्णमिदं पूर्णं न परोक्षमदस्त्वतः।
इदं पूर्णमदः पूर्णं नाल्पं कार्यमिदंत्वतः॥४५६॥

अदः पूर्ण ही इदं पूर्ण है। और इदं पूर्ण ही अदः पूर्ण है ऐसा परस्पर उद्देश्य विधेयभाव है। अदः पूर्ण परोक्ष न हो इस के लिये इदं पूर्ण कहा। इदं पूर्ण परिच्छिन्न कार्यात्मक ही न हो एतदर्थ अदः पूर्ण कहा।

यदि कार्यं भवेज्जीवो वाचारम्भणमापतेत्।
मृत्पिण्डे मृन्मयस्याह वाचारम्भणतां श्रुतिः॥४५७॥

पू. - यदि जीव कार्य है तो वाचारम्भण मिथ्या होगा। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' यह श्रुतिवचन है। मृत्तिका ही सत्य है कार्य घटादि मिथ्या है।

न च मिथ्यार्थमादाय सत्यशोधनसंभवः।
न हि नैल्यापरोक्ष्येण व्योम्नः पारोक्ष्यवारणम्॥४५८॥
नाप्यङ्कुरापरोक्ष्येण बीजशक्त्यपरोक्षता।
न शक्तेर्व्यापकत्वेन सिध्येद् वा व्यापकोऽङ्कुरः॥४५९॥
तदर्थपारोक्ष्यहृतिः त्वमर्थस्यापरोक्ष्यतः।
तदर्थस्याऽपरिच्छित्त्या त्वमर्थस्य तथाविधा॥४६०॥
इत्यादिकमशेषं हि भज्यते कार्यकारणे।
तस्मान्न दर्शनमिदं बुद्धिमारोहतीति चेत्॥४६१॥

मिथ्या अर्थ को लेकर सत्यशोधन करना संभव नहीं है। आप कहते

है तत् त्वं त्व तत् यहां त्वमर्थ की अपरोक्षता से तदर्थ की परोक्षता निवृत्त होगी। तदर्थ की अपिरिच्छन्नता से त्वमर्थ की परिच्छिन्नता निवृत्त होगी। हम कहते हैं, क्या आकाश में नीलिमा प्रत्यक्ष है तो आकाश भी प्रत्यक्ष है? बीजशक्ति व्यापक है तो अङ्कुर भी व्यापक माना जायेगा? या आकाश व्यापक है तो नीमिला भी व्यापक होगी?

विपरीतं हि किं नस्याद नैल्यं मिथ्येति खं मृषा।
अङ्कुरोऽस्त्यल्प इत्यस्मादल्पा शक्तिरपीत्यहो॥ ४६२॥

और विपरीत भी तो हो सकता है। नीलिमा मिथ्या है तो आकाश भी मिथ्या। अंकुर अल्प है तो शक्ति भी अल्प इत्यादि।

मैवं जीवो नैव कार्यं ब्रह्मणो, घटवन्मृदः।
खनैल्यमिव वा किन्तु पूर्णात् पूर्णमपदच्यते॥ ४६३॥

उ. - पूर्वोक्त दोष यहां नहीं है। जैसे मृत्तिका कार्य घट है वैसे ब्रह्म का कार्य जीव नहीं है। जैसे आकाश में नीलिमा कल्पित है वैसे ब्रह्म में जीव कल्पित नहीं है। तो फिर कैसा? पूर्ण ब्रह्म से पूर्ण जीव उदञ्चित अद्रिक्त होता है।

उद्रिच्यत इति व्याख्या कृता भाष्य उदच्यतेः।
केनाप्यतिशयेनेदं पूर्णमेव प्रकाशते॥ ४६४॥
तथा हि सच्चिदानन्दं पूर्णमित्युदितं पुरा।
नाना विधैरतिशयैस्तदेवात्र प्रकाशते॥ ४६५॥
नामरूपातिशयतः स्वयं पूर्णं प्रकाशते।
घटादौ सच्चिदानन्द-मज्ञानेनावृतं स्थितम्॥ ४६६॥
घटोऽस्ति भाति प्रिय इ-त्यस्ति भाति प्रियात्मकम्।
पूर्णं प्रकाशते नामरूपातिशयसंयुतम्॥ ४६७॥
देवदत्तोऽस्मि जानामि सुखंस्म स्वपिमीति च।
वृत्त्याऽज्ञाने निरस्ते तु सच्चिदानन्ददीपनम्॥ ४६८॥
सच्चिदानन्दमहमोऽनावृतं प्रायशो मतम्।
भासतेऽतिशयेशनैव प्रायः खलु दहिनाम्॥ ४६९॥

न चात्र सच्चिदानन्दजन्य कुत्रापि विद्यते।
नातः खनैल्यतौल्यं मृद्-घट साम्यं हिवेदमः॥ ४७०॥

उदच्यते का उद्रिच्यते ऐसा अर्थ भाष्य में किया है। उद्रेक अतिशय को कहते हैं जिस में कुछ उलटा सीधा कार्य होता है। कामोद्रेक क्रोधोद्रेकादि प्रसिद्ध है। जिस में कुछ अस्वाभाविक सा कार्य होता है। 'गतो भक्त्युद्रेकः परिणतिमसौ' इत्यादि महिम्नः स्तुति प्रयोग में विष्णु ने भक्त्युद्रेक में आकर अपने नैत्रकमल को ही कमलरूप में भगवान शंकर को चढाया। क्रोधोद्रेक में विवेकहीन होकर मातृपितृ ताडनादि करते हैं पूर्णोद्रेक में ही संसार बना। पूर्ण माने सच्चिदानन्द पहले बताया। उस में ही संसार कार्य हुआ घटोऽस्ति भाति प्रियः इस सच्चिदानन्द में नामरूपमय घट आ गया। देवदत्तोस्मि जानामि सानन्द में अस्ति भाति प्रिय में देवदत्त नामरूप घुसा भेद भासित होने लगा। घटादि में सत चित् आनन्द आवृत रहता है। वृत्ति से (चित्तवृत्ति से) अज्ञान निरास होने पर सत् चित् आनन्द दीप्त होता है। अहं से सत् चित् आनन्द प्रायः अनावृत रहता है। और अतिशय नामरूप के साथ प्रकाशित रहता है। हां, इतना निश्चित है कि सत् चित् आनन्द का जन्म कहीं भी नहीं होता इसलिये इदं में आकाश नीमिला की तुल्यता नहीं और मृद्घट तुल्यता भी नहीं है।

असत्त्वापादिकाऽभाना-ऽऽपादिका चावृती मते।
अज्ञानस्य ह्यनानन्दापादिकां च परे विदुः॥४७१॥
आभिर्हि सच्चितदानन्दं पूर्णं नो दीप्यतेऽनिशम्।
परोक्षज्ञानतोऽसत्त्वापादिनी विनिवर्तते॥ ४७२॥
अपरोक्षात्तथाऽसत्त्वाऽभानापाधावुभे स्यतः।
प्रेमवृत्त्या त्वनानन्दापादिन्या निवृत्तिं विदुः॥४७३॥

अज्ञान में दो आवरण हैं। असत्त्वापादक और अभानापादक। अनानन्दापादक को भी कुछ लोग मानते हैं। इन से सच्चिदानन्द आवृत्त होता है। परोक्ष ज्ञान से असत्त्वापदक की निवृत्ति होती है। अपरोक्ष ज्ञान

से असत्त्वापादक अभानापादक दोनों की निवृत्ति होती है। प्रेमवृत्ति से अनानन्दापादक की निवृत्ति मानते हैं।

घटाऽपरोक्षवृत्त्या हि निवर्तेते तदावृती।
तदा घटोऽस्ति भातीति स्फुरतो घटसच्चितौ॥ ४७४॥
संनिकृष्टोऽहमर्थस्तु नित्यस्तेन तदावृती।
धूते ततस्तत्स्फुरणान्न संशयविपर्ययौ॥ ४७५॥
नानन्दो दुःखसंसारवृत्त्या विद्धः प्रकाशते।
सुषुप्तौ दुःखविरहादुद्भूतः स प्रकाशते॥ ४७६॥

घट विषयक अपरोक्षवृत्ति से असत्त्वापादक और अभानापादक दोनों आवरण निवृत्त होंगे तब घट है भास रहा है। ऐसे सत् चित् दोनों का स्फुरण होता है। अहं (मैं) संनिकृष्ट होने से मैं हूं जान रहा हूं ऐसे सत् और चित् का नित्य प्रकाशन होता है। इसीलिये मैं हूं कि नहीं, मैं हूं ही नहीं, ऐसा न संशय होता और न विपर्यय होता है। तो आनन्द की भी अभिव्यक्ति हमेशा क्यों नहीं होती? इसलिये कि संसार दुःखरूप होने से दुःखवृत्ति से आनन्द अभिभूत होता है। सुषुप्ति में दुःख न होने से आनन्द अभिभूत नहीं रहता उद्भूत होता है। आनन्द का भी प्रकाश होता है।

ननु दुःखात्मकोऽयं चेत् संसारो भवतां मते।
दारपुत्रधनादिभ्य आनन्दः स्यात् कथं नृणाम्॥ ४७७॥

पू. - यदि संसार आप के मत मं दुःखरूप है, उससे स्वानन्द अभिभूत होता है तो पत्नी, पुत्र, धन आदि से कैसे सुख मिलता है?

न च तत्तद्गतानन्दमात्रा स्फुरति नात्मनः।
इति वाच्यं तेऽप्रियाश्चेदप्यानन्दप्रसङ्गतः॥ ४७८॥

यदि कहें - 'अस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति' के अनुसार तत्तद् दारादि स्थित आनन्द मात्रा का स्फुरण होता है, आत्मानन्द स्फुरण नहीं। तो दारसुतादि अप्रिय होने पर भी उन में आनन्दभान होने लगेगा।

न च वाच्यं प्रेमवृत्त्याऽऽनन्दभानं भवेदिति।
तस्याः सुषुप्तौ विरहान्नानन्दस्फुरणं भवेत्॥ ४७९॥

यह कहें कि प्रेम वृत्ति से आनन्द स्फुरण होता है। अप्रिय होने पर प्रेमवृत्ति न होने से आनन्द स्फुरण नहीं होता। नहीं। सुषुप्ति में प्रेमवृत्ति के न होने से आनन्द स्फुरण नहीं होना चाहिये।

**न च स्फुरेत् परानन्दः प्रेमवृत्त्येति सांप्रतम्।**
**अन्योन्याश्रयता, प्रेम्णा सुखं, प्रेम सुखादिति॥४८०॥**

ऐसा मानेंगे कि अन्य (दारादि) वृत्ति आनन्द मात्रा प्रेमवृत्ति से स्फुरित होगी (आत्मानन्द स्वंय स्फुरित होगा) तो यह भी सही नहीं। क्योंकि इस में अन्योश्रयता दोष है। प्रेम से सुख स्फुरण होगा, सुख स्फुरण से प्रेम होगा।

**अत्रोच्यते न संसारो दुःखात्मैवेति भण्यते।**
**परिणामादिदुःखेन दुःखरूपमुदीर्यते॥४८१॥**
**तथा चाह मुनिः सर्वं दुःखमेव विवेकिनः।**
**दुःखं विवेकिनां भाति सुखं चैवाऽविवेकिनाम्॥४८२॥**
**दुःखहेतुत्वतो दुःखं क्वचिद् दुःखात्मकत्वतः।**
**जन्म दुःखं जरा दुःखमित्यादि बहुधेरितम्॥४८३॥**

उ. - इस पर हमारा कहना यह हैं कि संसारदुःखाभाव ऐसा नहीं कहते परिणाम तापादि दुःख से दुःखरूप कहते है। परिणाम-ताप-संस्कार-दुःखैर्गुणवृत्तिविरोधाच्च दुखमेव सर्वं विवेकिनः इस पातञ्जल सूत्र में विवेकियों को दुःखरूप भासता है। अविवेकियों को सुखरूप भासता है यह भी अर्थ सिद्ध है। दुःख हेतु होने से बहुत चीज को दुःख बताया। और किसी को दुःखात्मक होने से।

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।**
**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्॥४८४॥**
**परिणामे विषमिवेत्यादिकं बहुधेरितम्।**
**विविच्य दर्शितं तेन सर्वं भगवता स्वयम्॥४८५॥**

'यत्तदग्रे विषमिव विषयेन्द्रियसंयद्यत्तदग्रेऽमृतोपमम्' इत्यादि गीता श्लोकों में इस का स्पष्टीकरण है।

मिष्टान्नरसनायोगात् सुखं प्रेमानपेक्षणम्।
तत्सापेक्षं प्रवयसः श्मश्रवाकर्षः सुखं शिशोः॥४८६॥
स एव शात्रवकृतः दुःखं भवति तस्यू हि।
तत् प्रेमोत्तेजकं क्वापि क्वापि चोत्कर्षकारणम्॥४८७॥

मिठाई का रसना से संयोग होने पर प्रेम की अपेक्षा रखे बिना ही सुख होने लगता है। बच्चा वृद्ध की दाढी खींचता है तो सुख प्रेमापेक्ष होता है। इसलिये प्रेम कहीं उत्तेजक है और कहीं उत्कर्ष कारण है। उत्तेज-काभावविशिष्ट होकर बाधकतत्त्व बाधा उत्पन्न करता है।

संसारवृत्तिसामान्य - मानन्दस्फूर्त्तिबाधनम् ।
योगिनां तन्निरासेन ह्यानन्दः स्फुरति स्फुटः॥४८८॥
मनः प्रत्यगिति श्लोके पुष्पदन्तो हि योगिनाम्।
निमज्जत इवाऽऽह्लादो ह्रदेऽमृतमये जगौ॥४८९॥

संसारविषयक समस्त वृत्ति आनन्द स्फुरण में बाधक (प्रतिबन्धक) है। योगी लोग संसारवृत्ति निरोध करते हैं तो उन को स्पष्ट आनन्द स्फुरण होता है। 'मनः प्रत्यक् चित्ते' इत्यादि महिम्नः श्लोक में पुष्पदन्तजी ने योगियों को अमृतम आनन्द सरोवर में गोता लगाने का आनन्द बताया है।

नाङ्गीचक्रुरनानन्दा-ऽऽपादिकामावृतिं पृथक् ।
संसारवृत्त्या स्वानन्दस्फुरणप्रतिबन्धनात्॥४९०॥
मेघवद् भववृत्तीनां गाढाऽगाढविभागतः।
आनन्दः सूर्यवद् भाति क्वापीषत् क्वापि नैव च॥४९१॥

इस प्रकार कई संतों ने अनान्दापादक आवरण को नहीं माना। निरन्तर संसार वृत्ति से आनन्द का स्फुरण प्रतिबन्ध हो जायेगा। हां ये संसार वृत्तियां मेघ के समान कहीं गाढ होती हैं। कहीं पतली होती है, जिस से कभी अल्पानन्द स्फुरित होता है कहीं नहीं। जैसे सूर्य अल्पमेघ में थोडा स्फुरित होता है गाढ मेघ में नहीं।

भक्तानां त्यागिनां वार्ताऽनानन्दपादकाऽऽवृतेः।
प्रेमवृत्त्याऽऽवृतेर्भङ्गादानन्दो भजतां स्फुरेत्॥४९२॥

जो त्यागी भक्त हैं अननान्दापादक आवरण की वार्ता उनकी है। प्रेम वृत्ति से उस आवरण के हटने से भक्तों को बडा आनन्द आता है।

निद्रायां ननु वृत्तीनां सर्वसां विलये सति।
पूर्णाऽऽदानेन परमा-नन्दः कस्मान्न मोक्षवत्॥४९३॥
न चास्वाप्सं सुखमिति सुखप्रत्यवमर्शतः।
अस्त्येव परमानन्दप्रतीतिरिति सांप्रतम्॥४९४॥
दीर्घनिद्रां तदा सर्वोऽप्याकाङ्क्षेदौषधादिना।
तत्रैव दारपुत्रादि - सुखमन्तर्भवेद्यतः॥४९५॥
यावानर्थ उदयाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु लोकेषु निद्रालोः स्याद्भवन्मते॥४९६॥
दुःखाभावे सुखप्रज्ञां ततो नैयायिका जगुः।
सुखमल्पावृतं त्वन्य इति चेदत्र योगिनः॥४९७॥

पू. - निद्रा (सुषुप्ति) में समस्त वृत्तियों का विलय होता है। तब पूर्णस्य पूर्णमादाय यह पूर्णादानानन्द होगा तो मोक्षानन्द प्राप्त क्यों नहीं होता। यह कहें कि मैं सानन्द सोया ऐसा परम आनन्दानुभव होता ही है। तो सब लोग औषधादि सेवन कर दीर्घ निद्रा में पडे रहने लगेंगे। दारपुत्रादि सुखेच्छा से जगना चाहते हैं यह समाधान भी नहीं होगा। पूर्णादानात्मक मोक्ष सुख में सर्व सुखान्तर्भाव होता है। यावानर्थ उदपाने यह गीता श्लोक यहां चरितार्थ हो जायेगा। इतना बदलना होगा - 'तावान् सर्वेषु लोकेषु निद्रालोः'. ऐसी दुर्गति न हो इसलिये नैयायिकों ने दुःखाभाव में सुख बुद्धि बतायी। दूसरा ईषदावृत सुख बताया।

अभावप्रत्ययालम्बा वृत्तिर्निद्रेतिगद्यते।
जाग्रद्वृत्त्याद्यभावे हि निद्रावृत्तिर्हि काचन॥४९८॥
प्रत्ययः पौरुषेयः स्याद् वृत्तिसारूप्यलक्षणः।
तस्यालम्बो वृत्तिरेव सारूप्यं न तया विना॥४९९॥

इस पर योगियों का कहना है निद्रा में वृत्तियों का सर्वथा अभाव नहीं है। जाग्रदादि वृत्ति के अभाव काल में निद्रा नामक वृत्ति होती है (अतएव

वृत्तिरूप आनन्दभान प्रतिबन्धक होने से परमानन्द प्रकाश नहीं होता, पूर्णादान भी नहीं होता) 'अभाव प्रत्ययालम्बना वृत्तिर्निद्रा' यह पातञ्जल सूत्र है। जाग्रदादिवृत्त्यभाव में - सुप्त पुरुष का जो प्रत्यय होता है उस का आलम्बन निद्रावृत्ति है। प्रत्यय पौरुषेय बोध को कहते हैं। जिसे वृत्तिसारूप्य बताया गया है। वृत्ति पर ही आधारित है वृत्तिसारूप्य। अतः उस बोध का आलम्ब वृत्ति। अभावे जाग्रदादिवृत्त्यभावे प्रत्ययस्य पौरूषेय बोधस्य आलम्बना=आलम्ब करनेवाली वृत्ति निद्रा है यह भगवत्पादानुसारी व्याख्या है। श्रीवाचस्पति एवं तदुपजीवी व्याख्याताओं की व्याख्या प्रकारान्तर से है। परंतु वह व्यासभाष्यानुरूप न होने से अधिक ध्यानयोग्य नहीं है।

**अस्वाप्सं सुसुखं, चित्तं प्रसन्नं, लघ्वभूद्वपुः।**
**दुर्निद्रो दुःखमस्वाप्सं स्त्यानं चेतोऽनवस्थितम्॥५००॥**
**गाढं मूढोऽहमस्वाप्सं क्लान्तं चित्तं वपुर्गुरु।**
**त्रैगुण्यं तत्फलं चैवं परामृशति जाग्रति॥५०१॥**
**न हि प्रत्यवमर्शोऽयं भवेदनुभवं विना।**
**अस्ति वृत्तिरतः सुप्तौ पूर्णादानं न विद्यते॥५०२॥**

मैं सानन्द सोया, चित्त प्रसन्न हो गया, शरीर हलका हो गया ऐसा किसी को होता है। बडी खराब नींद आयी, मन खराब हो गया, शरीर कांप रहा है ऐसा किसी को होता है। बेखबर सोया, माथा भारी हुआ ऐसा किसी को होता है। सत्त्व, रज और तम इन तीन गुणों के भावों से ऐसा स्मरण है शरीर के हल्कापन आदि उसका फल है यह स्मरण अनुभव के बिना जाग्रत में कैसे होगा? अतः सुषुप्ति में ऐसी अनुभवात्मक वृत्तियां निश्चित हैं। इसलिये सुषुप्ति में वृत्तियां है अतएव पूर्णादान वहां नहीं माना जा सकता।

**चित्तवृत्तिनिरोधस्य प्रसङ्गे मुनिनोदितम्।**
**चित्तमप्यस्त्यतः सुप्तौ योगिनामिति गम्यते॥५०३॥**

योगनिश्चितवृत्तिनिरोधः इस प्रसङ्ग में वृत्तियों के पांच प्रकार मुनि ने

बताये। अतः सुषुप्ति में योगियों के मत में चित्त भी रहता है ऐसा ज्ञात होता है।

श्रुत्यन्तचिन्तकाः सुप्तौ जगुस्तमसि तल्लयम्।
सुषुप्तिकाले सकले विलीन इति दर्शनात्॥५०४॥

वेदान्त चिन्तनपर सन्तों का कहना है कि सुषुप्ति में मन का अज्ञान में लय होता है। 'सुषुप्तिकाले सकले विलीने' ऐसा कैवल्योपनिषत् सुषुप्ति में सर्वलय बताया है।

मनः सर्वैः सहाप्येति ध्यानैरिति च दर्शितम्।
कौषीतक्यां हि गार्ग्याय काश्येनाजातशत्रुणा॥५०५॥

मन समस्त ध्यान वृत्ति के साथ विलीन हो जाता है ऐसा कौषीतकि में भी गार्ग्याजातशत्रुसंवाद में दिखाया है।

येऽन्ये पुरीतति मन ईयते न तु लीयते।
इति तेषामपि ज्ञानवृत्तिः सुप्तौ न विद्यते॥५०६॥
संकल्पनिश्चयाद्यात्म मनोबुद्ध्यादिकं विदुः।
तदात्मविरहे तिष्ठेत् तत्सर्वं कारणात्मना॥५०७॥
कम्बुग्रीवादिमद्रूपहाने कुम्भो मृदेव सः।
कारणं तत् किमिति चेदज्ञानं संप्रचश्महे॥५०८॥
नाऽभावरूपमज्ञानं भावरूपं तदैरयन्।
अव्यक्तं प्रकृतिः शक्तिरित्यादि पदगोचरम्॥५०९॥

दूसरे लोग जो यह मानते हैं कि सुषुप्ति में मन पुरीतत् नाडी में चला जाता है, लीन नहीं होता है उन के मत में सुषुप्ति में ज्ञान नहीं ही होता। और संकल्पविकल्पात्मकं मनः निश्चयात्मिका बुद्धिः इत्यादि लक्षणानुसार संकल्पादियुक्त ही मन बुद्ध्यादि है। सुषुप्ति में संकल्पादि नहीं है तो स्वरूप नहीं रहा तो यहीं तो लीन होना है। घट का स्वरूप है कम्बुग्रीवादिमत्त्व, वह न रहा, फिर भी घट रहेगा क्या? कम्बुग्रीवादिमत्त्व रूप छूट गया तो वह मिट्टी ही है, कारणमात्र है। वैसे संकल्प विकल्पादि न रहा तो कारणमात्र रह गया। वह कारण क्या है? अज्ञान। अज्ञान को अभावरूप

मत समझो। उसे भावरूप ही जान लो। उसी का नामान्तर है माया अव्यक्त प्रकृति शक्ति इत्यादि। यही हम कहते हैं कि सुषुप्ति में केवल अज्ञान ही कारणरूप से रहता हैं। सुषुप्तिकाले सकले विलीने तमोभिभूतः इस श्रुति का भी यही अर्थ है। तम माने अज्ञान माया।

अज्ञानेनावृत्तं सुप्तौ ज्ञानानन्दादिकं यतः।
ईषत् प्रकाशो भवति स्वज्ञानानन्दयोगतः॥५१०॥
राहुग्रस्तो यथा सूर्यः राहुं स्वं चाऽऽप्रकाशयेत्।
मोहग्रस्तस्तथात्मा च मोहं स्वं चाऽऽप्रकाशयेत्॥५११॥

सुषुप्ति में अज्ञान से आत्मा का ज्ञान आनन्दादि का आवरण हो जाता है अतः अल्प प्रकाशमात्र स्वीय ज्ञान आनन्दादि का होता है। राहुग्रस्त सूर्य राहु को और अपने को थोडा थोडा प्रकाशित करता है वैसे अविद्याग्रस्त आत्मा भी अपने आनन्दादि एवं अज्ञान को थोडा प्रकाशित करता है। (आ=ईषत्=अल्प)

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः॥५१२॥
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।
हरिः स्पष्टीचकारैवं व्याख्यातं च मया पुरा॥५१३॥
पूर्णादानं तु पूर्णस्य ज्ञानेनाज्ञानहेलनम्।
तेषामादित्यवदिति पूर्णमात्रावशेषणम्॥५१४॥

यही गीता में कहा-अज्ञान से स्वस्वरूप ज्ञान आनन्दादि आवृत्त होता है। तत्त्वमस्यादि वाक्य श्रवणजन्य ज्ञान से उस अज्ञान का नाश किया जाता है वही स्वस्वरूप ज्ञान आनन्दादि मेधापात्र होने पर आदित्य के समान प्रकाशमान हो जाता है, अपने परम स्वरूप को प्रकाशित करता है इत्यादि हम पहले व्याख्या कर चुके हैं। पूर्ण का पूर्णादान अज्ञाननाशन पूर्ण प्रकाशन है। आदित्य के समान स्वयं प्रकाशरूपेण प्रकाशस्थिति पूर्णावशेषण है।

लोकानामथ रुच्यर्थं किंचिदन्यच्च भण्यते।
मन्त्रस्य तद् दर्शयितुं सर्वतोमुखतां मया॥५१५॥

पूर्णं तदपरिच्छिन्नं ब्रह्म दिक्कालवस्तुभिः।
कल्पितत्वाद्दिगादीन्तं तैः परिच्छित्त्यसंभवात्॥५१६॥
एतत्कालं समारभ्य ह्येतत्पर्यन्तमस्त्यदः।
इति कालावधिर्नास्ति मध्यं पूर्णस्य तत्कुतः॥५१७॥
एतद्देशं समारभ्य चैतत्पर्यन्तमस्त्यदः।
नैवंदेशावधिःपूर्णे मध्यो देशः कुतो भवेत्॥५१८॥
आह चानादिमध्यान्तं विश्वरूपेक्षणेऽर्जुनः।
अनन्तवीर्यमित्यादि वदन्नेवाऽपरिच्छिदाम्॥५१९॥
सर्वं समाप्नोषि ततः सर्वोऽसीत्यभिधानतः।
चिच्छिदे च परिच्छेदं वस्तुनोऽपि धनञ्जयः॥५२०॥
देशकाल्यऽपरिच्छिन्नं पूर्णमेवमिदं जगत्।
कदारब्धं कदाऽन्तोऽस्येत्यवधिर्नैव विद्यते॥५२१॥
अनादिसृष्टिरेषान्तहीना मध्यमतः कुतः।
अधश्चोर्ध्वं कियद्दूरं पूर्वादिषु दिशास्वपि॥५२२॥
तथा च मध्यबिन्दुः कः को लोको मध्यसंस्थितः।
सर्वश्चेत्किंनु बहवो भवेयुर्मध्यबिन्दवः॥५२३॥
अधश्चोर्ध्वं प्रसृतता स्वयं भगवतोदिता।
कियत्पर्यन्ततानुक्तेः ज्ञायते कृत्स्नशस्तथा॥५२४॥
नान्तो न चादिर्न च संप्रतिष्ठेति स्फुटोक्तितः।
सर्वत्र सर्वदेत्येवमर्थतः प्रतिभासते॥५२५॥

भाष्यदर्शित दिशा में व्याख्या हो जाने पर यद्यपि अन्य अर्थ की ओर झांकने की आवश्यकता नहीं है। फिर भी लोगों की रुचि वृद्ध्यर्थ तथा मन्त्र की सर्वत्तोमुखता प्रदर्शनार्थ अन्य अर्थ भी दिखाते हैं ॥ ५०९ ॥ पूर्ण का अर्थ है देशकाल वस्तु से अपरिच्छिन्न ऐसा वह ब्रह्म है। देशादि उसी ब्रह्म में कल्पित होने से उनसे परिच्छेद नहीं हो सकता इस सन् से इस सन् तक ऐसी कालावधि न होने से उस का मध्य भी नहीं है। इस देश से लेकर इस देश तक ऐसी देशावधि न होने से दैशिक मध्यस्थान भी

नहीं है। जैसे भारत का नागपुर इत्यादि। यही अर्जुन ने कहा-अनादिमध्यान्तम्। दैशिक तथा कालिक दोनों प्रकार का आदि अन्त मध्य नहीं है ॥ ५२३॥ 'सर्वं समाप्नोति' से वस्तु परिच्छेद को हटाया ॥ ५१४॥ यह जगत पूर्ण दृष्टि से देशकालादि परिच्छिेद रहित है। कब से सृष्टि शुरु हुई कब तक चलेगी यह कालावधि कही नहीं जा सकती। अतः अनादि अनन्त होने से इस का भी मध्य नहीं है। देशावधि भी नहीं है। ऊपर कहां तक संसार नीचे कहां तक, पूर्वादि दिशा की ओर कितनी दूर तक यह कहा नहीं जा सकता। तब मध्य बिन्दु कौन? मध्यम लोक कौन? जिसे देखो वही मध्य है। क्या बहुत सारे मध्य बिन्दु होते हैं। भगवान अधश्चोर्ध्वं प्रसृताः कहा। किन्तु कहां तक? यह बताया नहीं। अतः सर्वशः यही अर्थ होगा। स्पष्ट शब्दों में भी कहा-नान्तो न चादिर्न च संप्रतिष्ठा (संप्रतिष्ठा=मध्य) फलतः सर्वदेश सर्वकाल व्याप्त संसार है ॥ ५१९ ॥

अत्रैव हेतुमप्याह पूर्णात् पूर्णमुदच्यते।
पूर्णादेव न पूर्णांशात् न वा कालविशेषतः ॥५२६ ॥

इस में हेतु है-पूर्ण से पूर्ण हुआ। पूर्ण के किसी अंश से नहीं। किसी कालविशेष में नहीं। अतः जगत पूर्ण ही होगा।

पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि।
इति श्रुतेर्भवेदंशान्न पूर्णादिति चेन्न तत् ॥५२७॥
अर्थान्तरं भवेत्तस्याः श्रुतेर्न तु यथाश्रुतम्।
यतः पूर्णेव्यवस्था न शक्या पादत्रिपात्त्वयोः ॥५२८॥
व्योम्नः पादस्त्रिपात्त्वं च कीदृशं स्यादुदीर्यताम्।
पादत्रिपात्त्वे शक्येते परिच्छिन्ने हि वस्तुनि ॥५२९ ॥

पादोऽस्य सर्वाभूतानि, त्रिपादस्यामृतं दिति इस श्रुति से इदमर्थ जगत पादात्मक अंश से पैदा होता है पूर्ण से नहीं यह शंका उचित नहीं। इस श्रुति का अन्य अर्थ है यथाश्रुत नहीं, क्योंकि पूर्ण में पाद तथा त्रिपाद की व्यवस्था ही नहीं हो सकती। परिच्छिन्न में ही पाद और त्रिपाद हो सकता है।

सहस्त्रशीर्षा पुरुषः पूर्णत्वात् पुरुषो मतः।
श्रुतिश्च पूर्णं येनेदं पिपर्तीति पुरः कुषन्॥५३०॥

इस में पूर्व मन्त्र सहस्त्रशीर्षा पुरुषः इत्यादि। वहां पुरुष का पूर्ण अर्थ है। 'येनेदं पूर्णं पुरुषेण सर्वं' ऐसी अन्य श्रुति पॄ पालनपूरणयोः धातु है। 'पिपर्तीति पुरुषः' ऐसी व्युत्पत्ति है। पुरः कुषन् इस उणादि सूत्र से रूप सिद्धि है।

स भूमिं सर्वतो वृत्त्वा ह्यत्यतिष्ठद्दशाङ्गुलम्।
भवनाद् भूमिरिति हि सर्वं कार्यजगद् भवेत्॥५३१॥
न दशाङ्गुलवृद्ध्यैव त्रिपात्त्वं तस्य संभवेत्।
अनन्तं हि जगत् स्पष्टं कियत्तत्र दशाङ्गुलम्॥५३२॥

'स भूमिं' इत्यादि प्रथम श्रुति का उत्तरार्ध है। भूमि अर्थात् भवति उत्पद्यत इस व्युत्पत्ति से कार्य जगत। यही पृथिवी नहीं। इस दस अगुंल ज्यादा होने पर भी सूर्य आदि तक वह नहीं ही रहेगा। अस्तु। वह कार्य जगत अनन्त है। यह जगत कहां समाप्त होगा उस के आगे क्या? अतः अनन्त स्पष्ट है। अनन्त जगत में दस अंगुल (दस इंच) कितना होगा? वह तीन पाद हो जायेंगे। अनन्त में दस अंगुल शून्यप्राय होता है।

यथाश्रुतार्थग्रहणे विरुद्धे स्तामुभे श्रुती।
तस्मादर्थान्तरं श्रुत्योरुभयोरपि निश्चितम्॥५३३॥
अनन्तेऽप्यणुमात्रं चेत्स्यादनन्तं मृषा ततः।
अपारमार्थ्यमाहास्य ह्यत्यतिष्ठदिति श्रुतिः॥५३४॥

यथाश्रुत अर्थ लेंगे तो दोनों श्रुतियां परस्पर विरुद्ध होंगी। इसलिये दोनों श्रुतियों का अन्य अर्थ है। अनन्त में दस अंगुल क्या एक तिलभर ज्यादा होगा तो अनन्त मिथ्या हो जायेगा। इसलिये अत्यतिष्ठत् से जगत मिथ्यात्व कहा जा रहा है।

पूर्णं तु व्यापकं ब्रह्म पादेऽप्यस्यास्तिता ध्रुवा।
किन्त्वाच्छन्नो जगति स भूतेन तददर्शनात्॥५३५॥

पूर्णमेव किमाच्छन्नं मैवं स्वप्रमेव तत्।
लोकदृष्ट्याल्पमाच्छन्नं पारमार्थ्ये स्वयंप्रभम्॥५३६॥

ब्रह्म पूर्ण है। वह एक पाद में न रहा तो व्यापक नहीं होगा। अतः एक पाद में भी वह है परंतु वहां माया से आवृत है इन भूतों के दर्शन में वह छिपा सा हो जाता है। क्या पूर्ण ब्रह्म आच्छादित है? नहीं। वह स्वयं प्रकाश है। अज्ञानियों की दृष्टि में आच्छादित परमार्थ दृष्टि से नित्य प्रकाश है।

अधिकं भेदनिर्देशात् पारमार्थिकसत्तया।
तद्बोधान्नाहिताद्यल्पसत्त्वे तत्तदबोधतः॥५३७॥

'अधिकं तु भेदनिर्देशात्' सुत्र में बताया है-पारमार्थिक सत्ता ही त्रिपात् में अधिक सत्ता है जो ब्रह्म की है। वह ब्रह्म एकपाद भूतों में भी है। पारमार्थिक सद्ब्रह्म बोध होने पर हिताहितकरणादि जो अपारमार्थिक है भासेगा ही नहीं। उस ब्रह्म के अबोध से अल्प सत्ता अर्थात् व्यावहारिक सत्ता को लेकर एकपाद में अहितकारणादि प्रतीत होता है। शेष भाष्य में।

ननु पूर्णं निजोद्भूतै - रिदमर्थैः प्रवत्स्यीति।
स्वोद्भूतैस्तनयैर्यद्वत् कुटुम्बं वर्धते यथा॥५३८॥
मैवं न वर्धते पूर्णं नैव क्वापि च लिश्यते।
अब्धिरद्भिः प्रविष्टाभिर्हृताभिश्च यथाऽचलः॥५३९॥

पू. - पूर्ण से इदमर्थ उदञ्चित-उत्पन्न होते हैं तो उनसे पूर्ण की वृद्धि होगी। जैसे अपने से उद्भूत पुत्र पौत्रादि से कुटुम्ब बढता है। उ. - नहीं। पूर्ण तो पूर्ण ही है, न वह बढता है और न घटता है। जैसे नदियों से पानी भरता रहता है, भाप के रूप में उससे पानी निकलता भी रहता है, फिर भी समुंदर अचल प्रतिष्ठ रहता है।

शताच्छतहृतौ शून्यं लक्षाल्लक्षहृतौ तथा।
पूर्णात् पूर्णहृतौ तद्वच्छून्यं स्यादिति चेन्न तत्॥५४०॥
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।
द्वित्रादिहरणे किं नु वक्तव्यं पूर्णतास्थितौ॥५४१॥

पूर्ण से कुछ वस्तु निकालने पर पूर्ण के घटने की बात दूर। पूर्ण से पूर्ण भी निकालें तो भी पूर्ण ही अवशिष्ट रहेगा। सौ से सौ निकला तो शून्य होगा। लाख से लाख निकालो तो शून्य होगा। पर पूर्ण से पूर्ण भी निकालो तो पूर्ण रहेगा।

**गवाश्वं महिमेत्याहुश्चैत्रादेर्भिन्नदर्शिनः।**
**पूर्णं जगदिदं नूनं ब्राह्मणस्य महात्मनः॥५४२॥**
**एतद् ब्रह्मविदः प्रोक्तं का वार्ता ब्रह्मणः पुनः।**
**एष नित्यो हि महिमा पूर्णस्य परमात्मनः॥५४३॥**
**न कर्मणा वर्धते न कनीयानिति हि श्रुतिः।**
**पूर्णत्वं महिमा नास्य वर्धते नापि लिश्यते॥५४४॥**

गो अश्व, दास भार्य इत्यादि भेददर्शी चैत्रादि की महिमा है। ब्राह्मण महात्मा की महिमा तो यह पूर्ण जगत होगा। यह ब्रह्मवेत्ता की बात हुई तब ब्रह्म के लिये कहना ही क्या है। परमात्मा की यह महिमा नित्य है-कालअवधि रहित है। देशवस्तु अवधि रहित भी है। क्योंकि कर्म से वह बढता नहीं है और घटता भी नहीं है। मतलब पूर्णत्व ही उस की महिमा है जो घटता बढता नहीं।

**कस्मिन् प्रतिष्ठितः स स्यात् स्वे महिम्नीति युज्यते।**
**यदि वा न महिम्नीति पूर्णमात्रावशेषणात्॥५४५॥**

पूरा जगत उसी की महिमा हो गयी (उस में ही रहेगी) वह पूर्ण परमात्मा किस में प्रतिष्ठित है? अपनी महिमा में। अथवा अपनी महिमा में भी नहीं। वह स्वयंप्रतिष्ठ है। पूर्णमात्र अविशिष्ट होने से आधाराधेय चिन्ता ही नहीं। पूर्णमात्र स्वरूप है।

**ॐ शान्तिः शान्तिः शान्तिः**

**आध्यात्मिकोपसर्गाणा-माधिभौतिकहृद्रुजाम्।**
**आधिदैविककोपानां शान्तिं त्रिः प्राह शान्तये॥५४६॥**

मानस एवं शरीर आध्यात्मिक उपसर्गों की (विघ्नकारी पीडा विकारों की) शान्ति के लिये, बाह्य भूतों से होनेवाले आधिभौतिक हृदयाघातादि

रोगों की शान्ति के लिये तथा अतिवृष्टि अनावृष्टि बुद्धि चाञ्चल्यादि आधिदैविक दैवीकोपों की शान्ति के लिये तीन बार शान्ति का पाठ उच्चारण किया जा रहा है।

**व्याध्याद्यन्तर्निमित्तोत्थक्लेशानां शान्तिरस्तु मे।**
**स्त्यानादिदौर्मनस्यादि कृच्छ शान्तिस्तथास्तु मे॥५४७॥**
**बाह्यैर्दंशादिभिर्ग्राम्यै - र्वन्यैर्व्याघ्रादिभिस्तथा।**
**जायमानस्यचोद्वेग-प्रभृतेः शान्तिरस्तु मे॥५४८॥**
**देवानामप्रियंयस्मान्मनुष्यास्तत्पदं विदुः।**
**ते विघ्नान् बहुधा कुर्यु-स्तत्तेषां शान्तिरस्तु मे॥५४९॥**
**इति विद्यार्थिनामेष शान्तिपाठो विधीयते।**
**कृतकृत्यतया चैषा शान्तिर्ज्ञानिभिरुच्यते॥५५०॥**

आध्यात्मिक उपसर्ग क्या है? जो अपने शरीरादि के अंदर जिन का निमित्त हैं जैसे शरीर में वात, पित्त, कफ, वैषम्य के कारण व्याधि आदि होते हैं। उनसे उत्पन्न क्लेश जिस के कारण अध्ययनादि बराबर नहीं हो पाते उन की शान्ति हो। वैसे ही मानसिक भी है। स्त्यानादि मानस है। स्त्यान माने अकर्मण्यता, चित्त आगे बढता नहीं, लगता नहीं। दौर्मनस्य माने मन खराब होना, जैसे झगडा देखकर मन खराब हो जाता है। आधिभौतिक क्या है? बाहर के आक्रमण से जो क्लेश होता है। ग्राम में मच्छर आदि से, जंगल में बाघ सियार आदि से। आधिदैविक क्या है। देवता नहीं चाहते कि मनुष्य ज्ञानी मुक्त होकर हमारे लिये यज्ञादि न करें। वे अतिवृष्टि अनावृष्टि आदि कई प्रकार से विघ्न डालते हैं। इन तीनों की शान्ति हो यह विद्यार्थी की प्रार्थना है। विद्वान तो कृतकृत्यता बोधनार्थ शान्तिपाठ करते हैं। तीनों ताप अहा शान्त हो गया।

**तन्मामावीत् परं ब्रह्म ह्यावीद्वक्तारमेव च।**
**इत्येवं कृतकृत्यत्वं श्रुतावन्यत्र दर्शितम्॥५५१॥**

इसीलिये तैत्तिरीय में तन्मामावीत इत्यादि कृतकृत्यत्व भी दिखाया है।

व्याधिः स्त्यानं संशयश्च प्रमादोऽलसतापि च।
तथैवाऽविरतिर्भ्रान्ति - दर्शनाऽलब्धभूमिते॥५५२॥
अनवस्थितता चैव विक्षेपा मुनिनोदिताः।
दुःखं च दौर्मनस्यं चा-प्यङ्गमेजयतापि च॥५५३॥
श्वासप्रश्वासवेगश्च विक्षेपसहभाविनः।
पृथगुक्ता इमे सर्वे विघ्ना आध्यातिमका मताः॥५५४॥

व्याधि और स्त्यान व्याख्यात है। शान्तिपाठ से कुछ फायदा होगा कि नहीं ऐसा संशय है। प्रमाद आलस्य प्रसिद्ध है। चित्त मनोराज्यादि से उपरत होता ही नहीं यह अनुपरति है। कुछ न कुछ उलटा पुलटा मन में आना भ्रान्तिदर्शन है। किसी भूमिका तक पहुंच न पाना अलब्धभूमिकत्व है। प्राप्त होने पर भी न टिकना अनवस्थितत्व है। ये सब विक्षेप है। किसी बात को लेकर दुःख होता रहे, मन खराब हो, शरीर कांपने लगे, भारी श्वास चलना ये विक्षेप के साथ होनेवाले अन्य दोष हैं। ये सभी आध्यात्मिक उपसर्ग हैं।

आगमिष्यन्त एते चेदन्ये वा माऽऽगमन्निति।
आगताश्चेन्निवर्तन्तापिति शान्तिः प्रपठ्यते॥५५५॥

ये आध्यात्मिक यदि आनेवाले हो, अन्य भी आधिभौतिक या आधिदैविक आनेवाले हो तो न आयें एतदर्थ शान्तिपाठ है। ये सब या इन में कुछ आ चुके हों तो निवृत्त हो जिस से अध्ययन सम्यक् संपन्न हो एतदर्थ शान्ति का विशेष रूप से प्रपठन किया जाता है। सिद्ध पुरुषों का आदत से स्वभाव से प्राप्त का पठन किया जा रहा है।

इति श्रीकाशिकानन्दगिरिणा कृतिना कृतम्।
पञ्चमं शुक्लयजुषः शान्तिव्याख्यानवार्तिकम्॥५५६॥

ॐ शान्तिः शान्तिः शान्तिः॥



ॐ

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो
बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदं।
माहं ब्रह्म निराकुर्याम्।
मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु।
तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु॥
ॐ शान्तिः शान्तिः शान्तिः॥

मम=मेरे (सर्वाणि=सभी) अङ्गानि=मुख उरस् उदरादि अङ्ग आप्यायन्तु=परिपुष्ट विद्याग्रहण सहयोगी हो। वाक् प्राणः चक्षुः श्रोत्र=वाणी, प्राण, नेत्र एवं श्रोत्र (आप्यायन्तु) परिपुष्ट हो। अथो=और बलं=बल शक्ति च=और सर्वाणि इन्द्रियाणि=समस्त इन्द्रियां (आप्यायन्तु परिपुष्ट हो) सर्वं=सभी औपनिषदं=उपनिषत् प्रतिपाद्य शुद्ध ब्रह्म=ब्रह्म स्वरूप हैं। अहं=मैं ब्रह्म=ब्रह्म का, मा निराकुर्यां=निराकरण न करूं - ब्रह्म विमुख न होऊं। ब्रह्म=ब्रह्म भी मा=मेरा मा निराकुर्यात्=निराकरण न करे-मेरे सामने ओझल न हो। अनिराकरणम् अस्तु=ब्रह्म का निराकरण न हो। मे अनिराकरणम् अस्तु=मेरा भी निराकरण न हो। तदात्मनि=उपनिषत् प्रसिद्ध उस आत्मा में निंरते=नित्य तत्परता से लगे हुए मयि=मुझ में उपनिषत्सु=उपनिषत् प्रतिपादित ये धर्माः=शमदमादि जो धर्म हैं ते=वे (धर्म है ते=वे) मयि=मुझ में सन्तु= सम्पन्न हो, आविर्भूत हो। ॐ शान्तिः ३ ॥ त्रिविध ताप की शान्ति हो। अस्तु।

नमः सकलकल्याणतायिने जगदात्मने।
अमेयायौपनिषद - पुरुषाय परात्मने॥ १ ॥

सकल कल्याणकारी 'सर्वं ब्रह्मौपनिषदं' के अनुसार जगदात्मा अमेय होने पर भी उपनिषन्मेय औपनिषद पुरुष परमात्मा को प्रणाम हो।

स्वस्थमस्तु सकलं कलेवरम्।
स्वस्थमिन्द्रियकदम्बकं मम॥ २ ॥
ब्रह्मणि स्वयमसान्यहं सदा।
ब्रह्म चास्तु मयि बोधधर्मणि॥ ३ ॥

अङ्ग प्रत्यङ्ग चक्षुः श्रोत्रादि सहित सर्व कला सहित शरीर मेरा ब्रह्म विद्या ग्रहणयोग्य स्वस्थ हो। अन्य भी समस्त इन्द्रिय समुदाय ब्रह्म ग्रहणोपकारी स्वस्थ हो। पूर्वोदित औपनिषद पुरुषरूपी ब्रह्म में मैं सदा स्थित होऊं वह निराकरणात्मक शून्य मेरे लिये न हो। और वह उपनिषत् प्रोक्त बोध रूप धर्म युक्त मुझ में रहे मैं निराकृत शून्यरूप न बनूं।

**व्याख्यातं यन्मया पूर्वं कथायां लोकबोधतः।**
**तत्रैव वार्त्तिकमिदं करोमि परिशुद्धये॥४॥**

कथा प्रवचनादि समय में पूर्व लोकबोधार्थ जो व्याख्यान किया उसी का परिशुद्ध रूप उपस्थित करने उसी पर यह वार्त्तिक लिख रहा हूं।

**श्रेयांसि बहुविघ्नानि साम श्रेयो महत्तमम्।**
**वेदानां सामवेदाऽस्मीत्याह स्म भगवान् स्वयम्॥५॥**
**सहस्रशाखः कथितः सामवेदो मुनीश्वरैः।**
**विघ्नसंभावनाऽत्रातः शान्तिरेषाऽत्र पठ्यते॥६॥**

श्रेयस्कर कार्य में बहुत सारे विघ्न होते हैं। महत्तम श्रेय सामवेद हैं क्योंकि भगवान ने स्वयं गीता में सामवेद को अपना स्वरूप बताया। और सामवेद को हजार शाखावाले महामुनि पतञ्जलि ने बताया। उस में विघ्नों की संभावना है ही अतः संभावित सर्व शान्ति निवृत्त्यर्थ यह (आप्यायन्तु) शान्ति पढी जाती।

**पन्नैच्छद्बदरीं गन्तुं न प्राभूद्दीर्घकालतः।**
**सन्नद्धा तु यदा गन्तुं कालगोचरतामगात्॥७॥**

पन्ना नाम की एक बडी भक्त हुई। वह बदरीनारायण जाने के लिये सोचती रही। तैयार होते ही विघ्न आ जाता था। लडकी की शादी है। फिर लडके की। फिर तैयार हुई तो लडके की सन्तान हुई। इस प्रकार लंबा समय बीता। अन्त में उस ने दृढ निश्चय किया कि अब सब छोडकर जाना ही है। निकलनेवाली ही थी। किन्तु काल ने कवलित किया।

**गङ्गास्नाने विघ्नकरान् योद्धॄन् लक्षं हरिर्जगौ।**
**भीमस्तान् हन्तुकामः सन् व्यस्मार्षीत्स्नानमेव च॥८॥**

भगवान ने कहा-गंगा स्नान करने कोई जाये तो एक लाख योद्धा विघ्न डालने रास्ता रोकते हैं। भीमसेन ने कहा मैं देखता हूं कौन कितने आते हैं। दिनभर आगे से आ रहे हो पीछे से आ रहे हो करता रह गया। वापिस आकर कहा - मेरे डर से एक भी नहीं आया। भगवान ने कहा-स्नान आपने कितनी बार किया। भीम सोच मे पडा। बोला-एक बार भी नहीं। भगवान ने कहा-ये ही तो विघ्न हैं।

**प्रतिबन्धकरा ब्रह्म-विद्यायां स्वजना अपि।**
**मा त्याक्षीदेष न इति मोहपाशकृताब्दुकाः॥ ९ ॥**

ब्रह्म विद्या में तो स्वजन भी प्रतिबन्धक बन जाते हैं। वे सोचते हैं कि यह ब्रह्मविद्या पा लेगा तो हम को छोडकर चला जायेगा। मोहपाश को ही उन्हों ने बेडी बनाकर विविदिषु को बांध देते हैं।

**विशेषस्त्वत्र देवाश्च विघ्नान् भीमान् प्रकुर्वते।**
**अन्यत्वदर्शिनस्तेषां पशवो हि दिवौकसाम्॥ १० ॥**

सब से अधिक विशेष बात यह है कि ब्रह्म विद्या में देवता लोग भी बडे-बडे भयानक विघ्न डालते हैं। उसमें कारण यह है कि भेददर्शी देवताओं के पशु होते है। **'अन्योऽसावन्योऽहमिति स पशुरेव देवानाम्'** ऐसा श्रुति भी कहती है।

**तथात्वं च द्विधा विघ्न-करणे तात् प्रयोजयेत्।**
**कथं तदिति च ब्रूमः कारणं बुधसम्मतम्॥ ११ ॥**

अन्यत्वदर्शियों का पशुत्व विघ्नोत्पादन में देवताओं को प्रेरित करता है। वह कैसे इस में विघ्नत्सम्पत कारण हम बताते हैं।

**पुशुत्वादुद्गता नेमे करिष्यन्ति हिं नः सुशम्।**
**अत्युद्गताः स्वतन्त्रान्नः शासिष्यन्ति पराजितान्॥ १२ ॥**

ये पशुभाव से ऊपर उठेंगे तो सेवा उपकारादि नहीं करेंगे। और अधिक उद्वेग तो हमें पराजित कर हम पर शासन करने लगेंगे।

**ऋग्वेदं भगवोऽध्येमि यजुर्वेदादिकं तथा।**
**परं न शोकमतरं घोरं संसारलक्षणम्॥ १३ ॥**

श्रुतं मया तु तरति शोकमात्मविदुत्तमः।
मां तारयतु शोकस्य पारमित्याह नारदः॥१४॥

श्री नारदजी ऋग्वेदादि सकल विद्या प्राप्त होने पर भी शोक नहीं तर सके। शोक माने संसार। वे बोले (सनत्कुमार को) मैंने सुना है आत्मज्ञानी शोक को पार कर सकता है सो आप मुझे शोक से पार कराईए।

सनत्कुमारो मृदित-कषायायाधिकारिणे।
भूमानं परमात्मानं व्याचचक्षे मुमुक्षवे॥१५॥
हतविघ्नाय भगवान् नारदाय महात्मने।
शोकस्याऽदर्शयत् परिमित्येवं श्रुतिरीक्ष्यते॥१६॥

भगवान सनत्कुमार मृदितरागादिकषाय अतएव अधिकारी मुमुक्षु नारदजी को जिन के विघ्न नष्ट हो गये भूमा परमात्मा की व्याख्या करके शोक का पार दिखाया और पहुंचाया ऐसी श्रुति छान्दोग्य में है।

एवं सत्यधिकारी चेदुपदेशाप्तिमात्रतः।
शक्नोति तमसः पारं द्रष्टुमित्यवगम्यते॥१७॥

इस प्रसंग से मालूम पडता है कि यदि मृदित कषाय अधिकारी हो तो आत्मोपदेश प्राप्ति मात्र से शोकरूपी तम का पार पाया जा सकता है।

ऋग्वेदादिकमध्येमीत्युक्त्वा तत्रैव दर्शितैः।
कर्मादिभिश्च नो शोकक्षय इत्यवगम्यते॥१८॥
नोचेत्तत्रोक्तकर्मादि कुर्वित्युपदिशेद्गुरुः।
नोपादिष्टं ततस्तत्र तदनास्थैव सूच्यते॥१९॥
इत्थं च ब्रह्मविद्यार्थी यज्ञादि न तनिष्यति।
दूरतः खलु तद्विद्वानिति प्रकटितं भवेत्॥२०॥
तदेतन्नैव देवानां कथंचिदपि हि प्रियम्।
यज्ञादिभिर्हि यत्तेषां तृप्तिः श्रुतिषु विश्रुता॥२१॥

'ऋग्वेदं भगवो अध्येति यजुर्वेदं भगवोऽध्येमि' इत्यादि नारदजी ने कहा। ऋग्वेदादि से शोक नहीं तर सके। उसीसे सूचित होता है कि

ऋग्वेदादि ज्ञान से नहीं, और वहां बताये हुए कर्मादि से भी शोकतरण नहीं होता है। अन्यथा सनत्कुमारजी कहते-ऋग्वेदादि ज्ञान ठीक है, परंतु वहां बताये हुए कर्मादि करो तो शोकतरण होगा। परंतु ऐसा कहा नहीं। अतः कर्मादि में अनास्था ही सूचित होती है। तब ब्रह्मविद्यार्थी यज्ञादि करेगा नहीं। ब्रह्मज्ञानी की बात दूर। पर यह देवताओं को अप्रिय है। क्योंकि यज्ञादि में जो आहुति दी जाती है उसी से देवताओं की तृप्ति होती है।

**द्वे अन्ने खलु देवानां हुतं प्रहुतमेव च।**
**अग्नौ देवान् समुद्दिश्य हवनं हुतमुच्यते॥ २२॥**
**हुत्वा तेभ्यो ह्यनु बलिहरणं प्रहुतमीर्यते।**
**विना न चान्नं कस्यापि तृप्तिर्भवितुमर्हति॥ २३॥**
**नैते विदध्युर्यज्ञादि वेदाध्यायिन एव चेत्।**
**अन्नप्राप्तिः किलान्यस्माद् देवा आशासतां कुतः॥ २४॥**

देवताओं के दो अन्न प्रसिद्ध है - हुत और प्रहुत (बृहदारण्यक) अग्नि में हवन हुत है। उस के बाद बलि प्रदान प्रहुत है। बिना अन्न भला कौन तृप्त होगा? ये वेदाध्ययनकारी ही यदि हवनादि न करे तो देवता दूसरे किस से अन्न की आशा रख सकते हैं? दूसरे को यज्ञादि में अधिकार ही नहीं है।

**ब्रह्मविद्यार्थिनां तेन तदध्यापयतामपि।**
**विघ्नं कुर्वन्ति देवास्ते नानारिष्टादिकारिणः॥ २५॥**

इसलिये जो ब्रह्म विद्या पढने लगते हैं और जो पढाने लगते है दोनों का ये देवता नाना अरिष्टों से विघ्न डालते हैं।

**ब्रह्मास्तीति न विज्ञान-मज्ञानमसुखं हि तत्।**
**ब्रह्मास्मीति तु विज्ञान-मानन्दैकरसत्वतः॥ २६॥**

'ब्रह्म है' इतना जानना विज्ञान नहीं, यह तो अज्ञान ही है। यह आनन्द प्रापक नहीं है। 'ब्रह्म हूं' यह ज्ञान विज्ञान है आनन्दैकरस है।

**अलकायां निधिगणाः सन्त्येतेन तु किं तव।**
**स्वतादात्म्ये सुखं तेन न त्वस्तीत्येव तत्तथा॥ २७॥**

अलकापुरी (कुबेर की नगरी) में निधियों का ढेर है यह ज्ञान हुआ तो उस से तुम्हारा क्या होगा? अपने साथ तादात्म्य हो तो सुख उससे होगा। 'वह है' इतने मात्र से वह सुखदायी नहीं होगा।

**कथं नु निधितादात्म्यं ममत्वातिशयात्तथा।**
**आध्यासिकं तु भवति तदित्यन्यत्तदास्ति तु॥ २८॥**
**पुत्रादौ विकले चैव सकले च यथा पिता।**
**विकलः सकलश्चेति मनुतेऽध्यासहेतुना॥ २९॥**

निधि का तादात्म्य अपने में नहीं है तो क्या कुबेर में है? है। ममत्वातिशय से है। हां वह आध्यासिक है यह बात अलग है। किन्तु तादात्म्य है सही। जैसे पुत्रादि विकल या सकल होने पर पिता उसका तादात्म्य कर अपने को विकल सकल समझता है। भले अध्यासतः हो।

**ब्रह्मैक्यं वस्तुतश्चास्ति तच्च ज्ञानात् प्रकाशते।**
**न पशुत्वं तदाऽस्य स्यात्तन्न देवप्रियं भवेत्॥ ३०॥**

पुत्रादि तादात्म्य आध्यासिक है इतने से साकल्यारोप मात्र से सुख होता है। यहां ब्रह्मात्मैक्य वास्तविक है। उसका अनुभव होने से परमानन्द होगा ही। तब पशुत्व नहीं रहेगा। वह देव प्रिय नहीं हो सकता।

**न पश्यति शृणोत्यन्यन्न विजानाति यत्र हि।**
**स भूमा तस्य विज्ञानं ब्रह्मज्ञानमुदीरितम्॥ ३१॥**

**'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा'** ऐसा छान्दोग्य में है। जहां अन्य दर्शन, अन्य श्रवण, अन्य विज्ञान नहीं रहता वही भूमा है। उसी का विज्ञान ब्रह्मज्ञान कहलाता है।

**ब्रह्मास्तीति वदन् क्वापि वैकुण्ठादौ विकल्पते।**
**कथं भवेत्तद्विज्ञानं ब्रह्मास्मीत्येव तत्ततः॥ ३२॥**

ब्रह्म अस्ति बोलनेवाला समझता है वैकुण्ठादि में कहीं पर है। परोक्षत्वेन परदेशस्थत्वेन कल्पनाविषय वह ब्रह्म ही नहीं तो वह ब्रह्मविज्ञान कैसे होगा? अतः 'ब्रह्मास्मि' यही ब्रह्मज्ञान है। दूसरा अन्यत्व विशिष्ट अज्ञान ही है।

ये त्वन्यदर्शिनस्ते हि पशवो नाकिनां प्रियाः।
नोपकुर्वन्त्यपशवो देवानामप्रिया हि ते ॥ ३३ ॥

जो अन्यदर्शी हैं वे ही पशु हैं, वे ही देवताओं को प्रिय हैं। क्योंकि जो अपशु है, अन्यादर्शी है, भूमादर्शी है वे देवताओं के उपकारकारी न होने से उनको अप्रिय है।

सेवाभिरुपकुर्वन्ति प्रभूनिभ्यान् हि सेवकाः।
अन्नवेतनदानेन प्रभवः सेवकानपि ॥ ३४ ॥
पशवश्चोपकुर्वन्ति दुग्धाद्यैः स्वान् पतीन् भृशम्।
स्वामिनश्चोपकुर्वन्ति तृणचारादिभिः पशून् ॥ ३५ ॥

नौकर या सेवक पादसंवाहन तैलमर्दनादि से मालिक का उपकार करते हैं। भोजन वेतनादि देकर मालिक लोग नौकरों का उपकार करते हैं। पशु-गाय आदि दूध आदि से मालिक का उपकार करते हैं और मालिक भी घास-चारा आदि देकर पशुओं का उपकार करते हैं।

इत्थं यज्ञादिभिर्मर्त्या अमर्त्यानुपकुर्वते।
वृष्ट्यादिभिरमर्त्याश्च मर्त्यानामुपकुर्वते ॥ ३६ ॥
देवान्भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ३७ ॥
इत्याह भगवान् स्पष्टं गीतायामर्जुनं प्रति।
परस्परोपकारित्वं सम्मतं तद् हरेरपि ॥ ३८ ॥

उसी प्रकार यज्ञादि में मनुष्य देवताओं का उपकार करते हैं। वृष्टि आदि से देवता मनुष्यों का उपकार करते हैं। 'देवान्भावयतानेन' इत्यादि गीता श्लोक में परस्परोपकारित्व स्पष्ट कहा भी है।

आदीयमाने ह्येकस्मिन् पशावप्यप्रियं भवेत्।
देवानामप्रियं तस्मान्नराणां ब्रह्मवेदनम् ॥ ३९ ॥

एक भी पशु खो जाये तो मालिकों को वह अप्रिय होता है। अतः मनुष्यों का ब्रह्मवेदन देवताओं को प्रिय नहीं है।

**समत्वमपि नेच्छन्ति श्रेष्ठिनः परिचारिणाम्।**
**अधिकत्वं कुतस्तत्र सर्वाधिक्यं कुतस्तराम्॥४०॥**
**समत्वं भावि चावेक्ष्य पृथोश्च सगरस्य च।**
**अश्वमेधशते विघ्नं चकार च पुरन्दरः॥४१॥**
**प्राजापत्यं समधिकं कर्मोपास्तिसमुच्चयात्।**
**ब्रह्मभावेऽनतिशये का वार्तात्र सुपर्वणाम्॥४२॥**

दूसरा कारण यह है कि परिच्छिन्न मतिवाले सेठ आदि अपने सेवकों को अपने बराबर भी देखना नहीं चाहते, अधिकता की बात क्या, और सर्वाधिक हो तो कहना ही क्या? राजा पृथु ने सौ अश्वमेध करने का संकल्प किया। वैसे सगर राजा ने भी किया था। इन्द्र ने देखा ये शतक्रतु होंगे तो मेरे समान होंगे तो अन्तिम अश्वमेध के अश्व का ही अपहरण इन्द्र ने किया। जब समानता में ही विघ्न डाले तो अधिकता में भी निश्चित है। इन्द्र से अधिक प्रजापति लोक बताया है। सर्वाधिक तो ब्रह्म भाव है। वह वाचामगोचर। **यतो वाचो निवर्तन्ते अप्राप्य मनसा सह** ऐसी श्रुति है। तदर्थ तो विघ्न डालेंगे ही।

**भयादस्याग्निस्तपति भयात्तपति भास्करः।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥४३॥**
**एतत्प्रशासने सूर्यचन्द्रौ कर्त्तव्यनिष्ठितौ।**
**भेतव्यमेभ्यः स्थातव्यं भवेच्चैतत्प्रशासने॥४४॥**

इस ब्रह्म के भय से अग्नि तपती है, सूर्य तपता है, इन्द्र और वायु स्वकार्य करते हैं, पांचवी मृत्यु दौडती रहती है। इसी के प्रशासन में सूर्यादि स्वकर्त्तव्यनिष्ठ हैं ये पशु ऊपर पहुंचेंगे तो इन से डरना होगा, इनके भी शासन में हमें रहना होगा।

**तस्मात् विघ्नान् करिष्यन्ति देवाश्चैतन्निवृत्तये।**
**स्वाध्यायाध्यापनरताः शान्तिपाठं प्रकुर्वते॥४५॥**

इसलिये देवता भी विघ्न करते हैं। अतः अध्ययन में और अध्यापन में संलग्न मनीषी अवश्य शान्तिपाठ करते हैं और करें।

आप्यायन्तु ममाङ्गानी-त्यङ्गानां पुष्टिरर्थ्यते।
आप्यायनं वर्धनं च तर्पणं तृप्तिरेव च॥ ४६॥
आपीनमूध इत्याहाऽऽप्यायतेर्मुग्धबोधकृत्।
आह वार्त्तिकारोऽप्याङ्पूर्वस्यान्धूधसोरिति॥ ४७॥
घटोघ्नीनां दुग्धभृतमूधः पुष्टं च पुष्टिदम्।
एवमङ्गादिकं पुष्टं पुष्टिदं स्यादर्थौचित्तम्॥ ४८॥
विद्यार्थिनामस्तु पुष्टं गुरुणामस्तु पुष्टिदम्।
शरीरमाद्यं भवति सर्वेषां धर्मसाधनम्॥ ४९॥
पुष्टिं प्रार्थयते तस्य तत्रत्यस्य च मन्मगीः।
आप्यायन्तुममाङ्गानीत्यादिना सामगामिनी॥ ५०॥

आप्यायन्तु ममाङ्गानि इत्यादि से अङ्गादि की पुष्टि की प्रार्थना की जा रही है। आप्यायन का वर्धन, तर्पण, तृप्ति आदि अर्थ है। आङ्पूर्वक प्याय धातु का 'आपीन' रूप है। **'आपीनमूधः आपीनोऽन्धुः'** ऐसा मुग्ध बोध में तत्त्वस्थल में दो ही अर्थ स्वीकृत किये हैं। **'आपीनभारोद्वहनप्रयत्नीत्'** इस रघुवंशीय श्लोक में इसीलिये विशेष्य वाचक पद के बिना धेनु (नन्दिनी) के वर्णन में आपीन शब्द का प्रयोग किया। अमर कोश में ऊधस्तु क्लीबमापीनम्। **'आङ्पूर्वस्यान्धूधसोः'** इस वार्त्तिक में दोनों अर्थों में निष्ठानत्व बताया। जो भी हो प्रकृत में दुग्धपूर्ण गोस्तन आपीन का अर्थ होने से और उस का यहां लिङन्त प्रयोग होने से आपीन समान पुष्टिद दुग्धपूर्णोपलक्षित पुष्ट पुष्टिद अङ्गादि हो यह यहां पर अर्थ होगा। विद्यार्थियों के लिये पुष्ट एवं आचार्यों के लिये पुष्टिद ऐसा विविक्तार्थ ज्ञातव्य है। धर्म साधन सर्व प्रथम शरीर है। अतः शरीर की और शरीरस्थ वाक् प्राणादि की पुष्टि के लिये यह प्रार्थना है।

पुष्टिर्ह्यनुग्रहो योगाद् भोगाद् रोगस्तु निग्रहः।
अङ्गेषु लाघवं कार्य-साधनं समनस्कता॥ ५१॥

पुष्टि अनुग्रह है योग से होता है। भोग से अनुग्रह नहीं, निग्रह है, रोग से होगा। अंगों में हल्कापन आयेगा (जो सात्त्विकता है)। कार्य में

मन लगेगा।

रोदनं शोकवेगेन हसनं हर्षवेगतः।
ज्वलनं क्रोधवेगेन स्तवनं भक्तिवेगतः॥५२॥
उत्साहवेगाद् यतनं तद् भवेत् कार्यसाधनम्।
स चाङ्गलाघवात्तस्मात् तदाशास्त्यत्र साधकः॥५३॥

शोक का वेग होने से मनुष्य रोने लगता है। हर्ष के वेग से हसने लगता है। क्रोध के वेग से जलन पैदा होती है। भक्ति के वेग से स्तुति करने लगता है। उत्साह के वेग से महेनत खूब करने लगता है जो इष्ट कार्यसाधक है। परंतु वह उत्साह तो अंगलाघव में होता है। भारी शरीर हो उत्साह बराबर नहीं होता इसी अंगलाघव की यहां प्रार्थना है जो सत्त्वगुण है। न कि पुष्टि माने भारी शरीर होना, मेदवृद्धि होना।

ध्रुवादीनां कथां श्रुत्वा बालाः पत्रादिभक्षणैः।
तपसा शोषयन्तोऽङ्गान्यद्यत्वे क्लेशमश्रयन्॥५४॥

ध्रुवादि की कथा सुनकर कईं बालकों ने पत्रादि खाते हुए तप किया, अंगशोषण किया किन्तु कुछ हाथ नहीं लगा, सिर्फ वे क्लेशभागी बने।

कृते युगेऽप्यपुष्टाङ्गाः श्रुत्याप्यायन्त्वितीरणात्।
अनादिश्रुतिबोध्यार्थः कृते नापोद्यते युगे॥५५॥

सत्य युग में भी अपुष्टाङ्ग क्लेश ही पाते रहे होंगे। श्रुति स्वयं अंगपोषण बतलाती है। अनादि श्रुति का सत्य युग में अपवाद नहीं हो सकता।

ध्रुवादीनां कथा तस्मादर्थवादपरा भवेत्।
क्लेशं सोढ्वापि कर्तव्यं तपः सिद्धिमभीप्सुभिः॥५६॥

ध्रुवादि कथा अर्थवादरूप है। क्लेश सहकर तप करो यदि सिद्धि चाहते हो।

आसाद्य नारदाद् योगविशेषं चेद् ध्रुवस्य सा।
तथाप्यसर्वसामान्यात् कृतेऽपि श्रुतिरक्षता॥५७॥

नारदजी से योग सीखकर ध्रुव ने वायु भक्षणादि से तप किया कहो तो भी वह सर्व सामान्य नहीं है। सर्व सामान्य तो आप्यायन्तु ममाङ्गानि

श्रुति प्रोक्त ही ठीक है।

अस्थिः प्राणाः कृते, मांसे त्रेतायां द्वापरे पुनः।
धमनीषु, कलावन्न इतिगीश्चार्थवादिकी॥५८॥

सत्य युग में हड्डी में प्राण थे। त्रेता में मांस में थे। द्वापर में धमनियों में, कलियुग में अन्न में प्राण रहते हैं इत्यादि वचन भी अर्थवादिक है।

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान्॥५९॥
इत्येवं हरिणोक्तेश्च योग्यं नैवाङ्गकर्शनम्।
भगवत्क्लेशनं तत्र स्वात्मज्योतिःप्रकर्शनात्॥६०॥

शरीर को जो सुखाते हैं उन्हें श्रीकृष्ण ने असुर बताया है। आत्मज्योतिकर्शनरूपी भगवत्कर्शन भी उससे होता है।

न चाप्यायनमङ्गानां मेदोवर्धनमिष्यते।
निद्रालस्यप्रमादादि-भूरिदोषप्रसक्तितः॥६१॥

मेदोवृद्धि भी आप्यायन नहीं है। उससे प्रमाद आलस्यादि अनेक दोष ही होंगे।

तस्मादनुग्रहः पुष्टिस्तदेवाप्यायनं मतम्।
यतो लाधवमङ्गेषु कर्तव्ये समनस्कता॥६२॥

इसलिये अनुग्रह ही पुष्टि है जिस से अङ्गों में हल्कापन हो, कार्य में मन लगा रहे।

युक्ताहारविहारेण युक्तचेष्टेन कर्मसु।
युक्तस्वप्नादिकेनानु-गृह्यन्तेऽङ्गानि धीमता॥६३॥

गीतोक्त-युक्ताहारविहारता, कर्म उपयुक्त चेष्टता, युक्त नींद एवं युक्त जागरणादि पुरुष ही अपने अंगों पर अनुग्रह करते हैं।

## वाक्

वागाद्याप्यायनं चात्र प्रार्थ्यते परमात्मनः।
गुरूपसदनादूर्ध्वं वागेवाद्यं प्रवर्तते॥६४॥

वाणी आदि के आप्यायन की भी प्रार्थना है। गुरुपसदन के बाद प्रथम वाणी ही प्रवृत्त होती है।

तद्विद्धि प्रणिपातेन परिप्रश्नेन तत्र च।
वाच आप्ययनादेव परिप्रश्नस्य संभवः॥६५॥

गुरुपसदन-नमस्कार तक अङ्गाप्यायन से होगा। तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया-यहां उसके बाद परिप्रश्न कहा। उसके लिये वाणी का आप्यायन आवश्यक है।

नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः।
जानन्नपि च मेधावी जडवल्लोकमाचरेत्॥६६॥
अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति॥६७॥
इत्येवं मनुनोक्तत्वात्प्रश्नः कार्यो मुमुक्षुणा।
माभूत् सोऽधर्मत इति वागाप्यायनमर्थ्यते॥६८॥
अब्रुवन् विब्रुवन् वापि नरः पतनमृच्छति।
इत्यप्युक्तमतोऽप्येव वागाप्यायनमिष्यते॥६९॥
स्वामिन्नमो नमद्बन्धो भवाब्धिपतितोऽस्म्यहम्।
दयासिन्धो दयादृष्ट्या मामुद्धर तवास्म्यहम्॥७०॥

न पूछने पर या अन्याय से पूछने पर तत्त्व वर्णन न करें। अधर्म से पूछनेवाला या बोलनेवाला मृत्यु को या विद्वेष को प्राप्त होगा ऐसा मनुवचन होने से प्रश्न करें सो भी न्याय और धर्म के अनुसार। स्वामिन्नमस्ते नतलोकबन्धो इत्यादि से आचार्य ने प्रश्न शैली बतायी है यही वागाप्यायन है।

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतमिति धर्मं प्राह सनातनम्॥७१॥

सत्यं ब्रूयात् इत्यादि कहकर मनु ने कहा यही सनातन धर्म है।

ईश्वरस्तवने सम्यगीश्वरोऽपि प्रसीदति।
ततश्चानुग्रहस्तस्य सर्वकार्येषु जायते॥७२॥

सम्यक् ईश स्तुति से ईश प्रसन्न होकर अनुगृहीत करेंगे। जो सर्व कार्य साधक है।

**मन्त्रादिपाठः शुद्धश्च वाचा सम्पद्यते नृणाम्।**
**ततः संजातपुण्यस्य वेदान्ते स्यात् प्रवेशनम्॥७३॥**

वाणी से शुद्ध वेदपाठ होने पर जो पुण्य होगा उससे वेदान्त में प्रवेश होता है।

**वेदानुवचनेनैते विप्रा विविदिषन्ति तम्।**
**इति श्रुत्यावगमितं कार्यं वाक्पोषणं ततः॥७४॥**

गुरु मुख से सुनकर वैसा वेदपाठ करनेवाले विविदिषु विद्या पाता है ऐसा श्रुति में कहा है अतः वाक्पोषण होना चाहिये।

**/स्वरवर्णादिहीनस्तु न सम्यक् फलदायकः।**
**तद्युक्तं वदितुं शक्तः समाप्यायितवाक् पुमान्॥७५॥**

वर्णस्वरादिच्युति होने पर वेदपाठ सम्यक् फलदायी नहीं होता। वर्णस्वरादियुक्त पाठ आप्यायित वाणीवाला मनुष्य ही कर सकता है।

**स्वाध्यायान् मा प्रमद इति व्याहरति श्रुतिः।**
**स्वाध्यायो वेदपाठश्च मन्त्राणां जप एव च॥७६॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥७७॥**

स्वाध्याय से प्रमाद मत करो यह श्रुति है। स्वाध्याय माने वेदपाठ और मन्त्र जप। 'अनुद्वेगकरं' इत्यादि गीता श्लोक स्वाध्यायाभ्यास को वाङ्मय तप बताया है।

**यत् प्रब्रवाम शरदः शतं प्रवचनं तु तत्।**
**ततोऽपि स्यान्महत् पुण्यं ज्ञानदानसमुद्भवम्॥७८॥**

प्रब्रवाम शरदः शतं मन्त्र में प्रवचन करने बताया (ब्रुवोवचिः) उस से ज्ञानदान होता है जो महान पुण्य कार्य है।

**एतत् सम्पद्यते सर्वं वागाप्यायनतः सताम्।**
**कथमाप्यायिता वाक् स्यादिति प्रश्नस्तु तिष्ठति॥७९॥**

नन्वनेनैव भवति शान्तिपाठेन सा तथा।
सत्यं पृच्छामि समुपोद्बलकं शृणु तर्हि तत्॥८०॥
ऋचं वाचं प्रपद्येऽहं प्रपद्येऽहं मनो यजुः।
इत्येवमाह मातेव श्रुतिः सर्वहितैषिणी॥८१॥

पूर्वोक्त परिप्रश्नादि सभी वाणी के आप्यायन से संपन्न होगा। परंतु वाणी का आप्यायन कैसे होगा यह प्रश्न रहेगा। क्यों प्रश्न रहेगा? **'आप्यायन्तु ममाङ्गानि वाक्'** इत्यादि प्रार्थनारूपी शान्तिपाठ से हो जायेगा। बात सत्य है। प्रार्थना के साथ उपोद्बलक-साथी भी चाहिये। सुनो, ऋतं वाचं प्रपद्ये मनो यजुः प्रपद्ये इत्यादि श्रुति स्वयं माता के समान अभिनीत कर तदर्थ उपासना बताती है।

वाणी ममैषा भवति स्फुरदृङ्मन्त्ररूपिणी।
इत्यृग्रूपेण वाणी स्वो-पास्याप्यायनसिद्धये॥८२॥
प्रपत्तिरत्र व्याख्याता बहुभिः शरणागतिः।
दृढभूमिर्दीर्घकाल - सत्कारासेविता भवेत्॥८३॥
ऋचं वाचं प्रपश्यंस्तां न कश्चिद्दूषयिष्यति।
तस्यां ततः पटुत्वं स्यादित्याहुः कविपुङ्गवाः॥८४॥

यह मेरी वाणी ऋक् मन्त्र स्वरूपा है, ऐसी अपनी ही वाणी की उपासना करो। प्रपत्ति शरणागति है ऐसा बहुत सारे विद्वान मानते हैं। दीर्घकाल वैसा आलेखन करने पर वह दृढ भूमि हो जायेगी। अपनी वाणी को ऋग्वेद रूप में देखने लगते हैं उसमें कोई दोष वह सहन न करेगा। तब वाणी में पटुता आप्यायन होगा यह क्रान्तदर्शियों का कहना है।

मन आप्यायनं चात्र प्रपत्तिश्रुतिवीक्षणात्।
मनःप्रसादसौम्यत्व-मौनाद्यैस्तच्च सिध्यति॥८५॥
यजुष्ट्वभावो मनसि तत्रोपोद्बलको मतः।
पूर्ववत् सकलं तत्र तदुपास्त्योपपद्यते॥८६॥
मनसोऽनिन्द्रियत्वं चे - देवमत्रोपलक्ष्यताम्।
इन्द्रियाणि च सर्वाणी-त्यत्र शेषमवेक्ष्यताम्॥८७॥

वाणी के साथ मन का भी आप्यायन प्रकृत शान्ति में उपलक्षणीय है क्योंकि मनो यजुः प्रपद्ये इस प्रपत्ति श्रुति में मन में यजुर्दृष्टि बतायी है। मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रह इत्यादि गीतोक्त सभी मन का आप्यायन ही है। प्रकृत शान्तिपाठ मन के आप्यायनार्थ है उसका उपोद्बलक प्रपत्ति-श्रुति-कथित उपासना है। अन्य सभी पूर्ववत् है। मन को अनिन्द्रिय माननेवालों के लिये यह उपलक्षण है। इन्द्रिय हो तो 'इन्द्रियाणि च सर्वाणि' में समझना।

## प्राणः

आप्यायतु मम प्राणस्ततः स्याद्दीर्घजीविता।
चिरजीवनसंसाध्या ब्रह्मविद्या निगद्यते॥८८॥

मेरे प्राण आप्यायित हो। उससे दीर्घ जीवन की प्राप्ति होती है। लंबे जीवन से ही ब्रह्मविद्या सम्पन्न होती है।

बहुनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
दीर्घजीवनयुक्तानां न द्वित्रशरदायुषाम्॥८९॥

भगवान कहते हैं-बहुत जन्मों के अन्त में ज्ञानवान मुझे प्राप्त होता है। क्या दो-तीन साल की आयु तक के बहुत जन्मों के? नहीं। दीर्घ जीवन जन्मों के।

बाल्यमज्ञानतो याति यौवनं च कियच्चन।
दीर्घजीवनतो ज्ञानं किंचित् किंचित्प्रवर्धते॥९०॥
उत्तरोत्तरमेवं स वर्धमानात्मवेदनः।
बहूनां जन्मनामन्ते पूर्णज्ञानमवाप्नुयात्॥९१॥

शुरुआत में बाल्यकाल प्रायः अज्ञान में ही बीत जाता है। यौवन का भी कुछ अंश ऐसा ही है। दीर्घ जीवन हो तो धीरे-धीरे आत्मज्ञान बढता है। ऐसा बढते-बढते कई जन्मों में वह पूर्ण ज्ञानी होता है।

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
इत्युक्तः पूर्वजन्मीयोऽप्यभ्यासो वृद्धिकारणम्॥९२॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकल्मकः।
अनेकजन्मसंसिद्ध इत्यप्याह हरिः स्वयम्॥९३॥

पूर्वाभ्यास से ही आगे-आगे मनुष्य बढता है यह पूर्वभ्यासेन, प्रयत्नाद्यतमानस्तु इत्यादि गीता श्लोकों में स्पष्ट है।

जिजीविषेच्छतमिह समा इत्यब्रवीच्छ्रुतिः।
धात्वर्थं शाब्दिका आहुर्यज्जीव प्राणधारणे॥९४॥

सौ वर्ष जीने की बात जिजीविषेच्छतं समाः यह श्रुति भी कहती है। जीव प्राणधारणे ऐसा धात्वर्थनिर्देश है अतः प्राणधारण ही जीवन है।

गुरोर्गिरः पञ्चदिना-न्यधीत्यादिरीतितः।
न शक्या ब्रह्मविद्येयं प्रासुं केनापि यत्नतः॥९५॥

'गुरोर्गिरः पञ्चदिनान्यधीत्य' इत्यादि मजाक में कहा जाता है।

अनादिकालसंसार - हेत्वविद्यापसारणम्।
अनेकजन्मसंसिद्धः कर्तुं कश्चन कल्पते॥९६॥

अनादिकालीन संसार को पैदा करनेवाली अविद्या अनेक जन्मों में सिद्धि पाने पर सिद्धि पाये कोई कोई मिटा पाता है।

उत्पन्नापि च विद्येय-मज्ञानेनाभिभूयते।
चिराभ्यसात् स्थिरा सास्याद् विद्या कालेन पच्यते॥९७॥

उत्पन्न हुई भी विद्या परोक्षप्राय होने से अविद्या से अभिभूत होती है। लंबा अभ्यास से ही वह परिपक्व अपरोक्षरूप होती है। विद्या कालेन पच्यते यह प्रसिद्ध है।

मारुतस्तूरसि चरन् मन्दं जनयति स्वरम्।
इति वाक्प्राणयोरत्र सहपाठः समादृतः॥९८॥

प्राणवायु हृदय में विचरता हुआ मन्द स्वर उत्पन्न करता है इसलिये वाक् और प्राण को साथ में श्रुति ने पाठ किया।

वाचः परा च पश्यन्ती मध्यमा वैखरीति च।
चतस्रो मारुतस्तत्र समुद्भावयिता मतः॥९९॥

परा, पश्यन्ती, मध्यमा, वैखरी ऐसी चार प्रकार की वाणी को मारुत

ही उत्पन्न करता है।

प्राणायामादिभिर्योगैः प्राणस्याप्यायनं भवेत्।
मूर्ध्न्याधायात्मनः प्राणमोमित्येकाक्षरं जपेत्॥१००॥

प्राणायामादि योग से प्राणाप्यायन होता है। मरण समय में मूर्धा में प्राणों को लाकर ॐकार जप करने को बताया है।

आप्यायन्त्विति पाठेन प्राणस्याप्यायनं मतम्।
तत्रोपोद्बलकं प्राह प्राणोपास्तिमपि श्रुतिः॥१०१॥

आप्यायन्तु ममाङ्गानि - प्राण इस प्रकार शान्तिपाठ श्रुति ने लिङ्ग प्रमाण से प्रकृत शान्तिपाठ प्राणाप्यायन का भी कारण बताती है। इसमें बल लाने के लिये प्राणपोषण के लिये विशेष उपासना का वर्णन भी श्रुति में आया है।

साम प्राणं प्रपद्येऽह-मित्यूचे याजुषी श्रुतिः।
समदृष्टिः प्रकर्तव्या प्राणे पाटवसिद्धये॥१०२॥

प्राण में समबुद्धि करूं, उसकी शरणागत होऊं ऐसी प्राणपाटवार्थ श्रुति है।

प्राणं ज्येष्ठं जगौ श्रेष्ठं प्राणदृष्टिर्हि साम्न्यतः।
मैवं वेदो हि भगवान् कर्मब्रह्मावबोधकः॥१०३॥
ऋगादिसाहचर्येण वेद एवेह गृह्यते।
रथन्तरादिगीत्या च गीयते सासगैः स हि॥१०४॥
वाङ्मनश्चक्षुरादीनामाश्रयत्वस्य निश्चयात्।
तत्साहचर्यतः प्राण आश्रयत्वेन गृह्यते॥१०५॥
कर्तुं प्राणदृशं साम्नि यद्यप्यन्ये बभाषिरे।
प्रक्रमाननुकूलत्वात् प्राणे सामदृशं वयम्॥१०६॥

प्राण को ज्येष्ठादि श्रुति में वर्णित है। अतः उत्कर्ष होने से साम में प्राण दृष्टि उचित है ऐसी शंका नहीं है। क्योंकि वेद भगवान है, कर्म ब्रह्मावबोधक है। प्राण का ज्येष्ठत्वादि वाचनिक है। साम से सामवेद ही लेना है न कि गीतिमात्र। क्यों? ऋगादि साहचर्य से वेद ही उपस्थित होता

है। वाक्, मन, चक्षु आदि आश्रयत्वेन निश्चित होने से उनके साहचर्य से प्राण भी आश्रय ही होगा।

भाष्यं चाप्रतिकूलं नः सायणाचार्यभाषितम्।
तत्रोक्तं पाटवं त्वेत - च्छ्रुतेराप्ययनं मतम्॥१०७॥

साम प्राणं प्रपद्ये इत्यादि पर श्री सायणाचार्यकृत भाष्य हमारे अनुकूल है। वहां वागादि पाटव जो फल बताया है वह आप्यायन्तु श्रुति के अनुसार आप्यायन बताया है।

## चक्षुः

चक्षुराप्यायनं चैव ध्यानार्थमुपयुज्यते।
वरेण्यं सवितुर्भर्गो ध्यायेमेत्यब्रवीच्छ्रुतिः॥१०८॥

चक्षु का भी आप्यायन ध्यानार्थ आवश्यक है। गायत्री में सूर्य के वरणीय तेज का ध्यान बताया है।

आदित्यवर्णं तमसः, परस्तात् पुरुषं परम्।
उपास्य हि स्वयंज्योतिः परं सम्पद्यते पुमान्॥१०९॥

आदित्य समान प्रकाश वर्णयुक्त, तम से उपरिस्थ परम पुरुष की उपासना करके ही स्वयंज्योति परम पद को मनुष्य प्रास होता है।

तद्दर्शनं चक्षुषैव ततो ध्यानं तदाकृति।
तेनोपलक्षितं ब्रह्म साधकानां प्रकाशते॥११०॥

आदित्यवर्णं बताया तो आदित्यवर्ण प्रकाशदर्शन चक्षु से ही होगा। उसके आकार में अंदर ज्योतिश्चिन्तन किया जाता है। उस ध्यान से उस ज्योति से उपलक्षित ब्रह्म साधकों को प्रकाशित होने लगता है।

प्रकाशात्मक एवेशो ध्यातव्योऽस्ति शुभेच्छुना।
अन्धकारमयो देवो न ध्यातव्यः कदाचन॥१११॥
इत्थमभ्यस्यतस्तस्य बुद्धिः संजायते स्थिरा।
ततः सर्वमपास्यैव तिष्ठेद् ब्रह्मात्मना बुधः॥११२॥

**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये।**
**इत्यत्रैव क्रमः प्रोक्तो न चिरं सूर्यवीक्षणम्॥११३॥**

एक बार दृष्ट प्रकाश को लेकर प्रकाशात्मक परमात्मा का ध्यान शुभाकांक्षी को करना चाहिये। अन्धकारमय देव का नहीं। ऐसा अभ्यास करनेवालों की बुद्धि स्थिर हो जाती है तब प्रकाशता धर्म को भी छोडकर ब्रह्मभाव से स्थित होना चाहिये। **'तत्त्वं पूषन्नपावृणु'** इस मन्त्र में ही क्रम बताया है। न कि बहुत देर तक सूर्य को देखकर तुम अपने इस प्रकाशमयरूप हटाने की प्रार्थना करना। सूर्य को ज्यादा देर तक देखते रहने से आंख खराब होने की अधिकतर संभावना रहती है।

**सूर्यप्रकाशविरहे दीपं प्रज्वाल्य चिन्तयेत्।**
**पूजादावत एवेष्टं दीपप्रज्वालनं सताम्॥११४॥**

जहां सूर्य प्रकाश नहीं वहां दीपक जलाकर पूर्वोक्त क्रम संपादन करें। पूजा आदि में इसीलिये दीपक जलाने का नियम सत्पुरुष रखते हैं।

**चक्षुः श्रोत्रं प्रपद्येऽत्र प्रपत्तिरुभयान्विता।**
**चक्षुः प्रपद्ये श्रोत्रं च प्रपद्य इति योजना॥११५॥**

ऋचं वाचं प्रपद्ये में वाणी की ऋक्‌रूप से उपासना अर्थ है वेसे चक्षुः श्रोत्रं प्रपद्ये का चक्षु को श्रोत्ररूप से या श्रोत्र चक्षुरूप से उपासना अर्थ नहीं, किन्तु चक्षु की उपासना और श्रोत्र की उपासना ऐसी दो अलग है।

**विधेयविषयस्तर्हि कोऽन्यत्र भवतीति चेत्।**
**अत्राहुः सायणाचार्यास्तथाधिष्ठातृदेवता॥११६॥**

यदि दो अलग है तो विधेय उपासना का विषय क्या होगा? इस पर श्री सायणाचार्य कहते हैं - तत्तदधिष्ठातृ देवता विधेय विषय है।

**चक्षुषो दर्शिता शास्त्रे सूर्योऽधिष्ठातृदेवता।**
**एवमेवोत्तरत्रापि श्रोत्रादिष्ववबुध्यताम्॥११७॥**

चक्षु के अधिष्ठाता शास्त्रों में सूर्य बताया है। आगे भी ऐसा ही समझना।

चक्षुरामर्दने ज्योतिर्गोलकोऽन्तः प्रकाशते।
सूर्यरूपं विचिन्त्यैतं प्रत्ययावर्तनं मतम्॥११८॥

आंख थोडी दबायें तो गोलाकार ज्योति प्रकाशित होती है उसे सूर्यरूप से विशाल स्वरूप चिन्तन करना चक्षु उपासना है।

किं चाक्ष्युपनिषत्प्रोक्ता क्रियतां तदुपासना।
ततोऽपि सम्यग्भवति चक्षुराप्यायनं यतः॥११९॥

अक्ष्युपनिषत् में कथित उपासना से भी चक्षु का आप्यायन होगा।

सा त्वों नमो भगवते श्रीसूर्यायाक्षितेजसे।
खेचराय नमस्तुभ्यं महासेनाय ते नमः॥१२०॥
तमसे रजसे तुभ्यं सत्त्वाय च नमो नमः।
असतो मा सद्गमय तमसोज्योतिरेव च॥१२१॥
मृत्योर्माऽमृतं गमये-त्येवं मन्त्रैः स्तुयाद्रविम्।
नमो भगवते सूर्यायादित्यायाक्षितेजसे॥१२२॥
तवाहोवाहिनी रश्मिसमूहो वाहिनीव ते।
स्वाहाऽक्षिरोगनाशाय भेदबुद्धिं जुहोमि वा॥१२३॥

यह स्तुति बोलें, इस का मूल मन्त्र भी लगभग ऐसा ही है। मूलानधिकारी के लिये पुराणादि में किंचिद्भेद के साथ पढा जाता है।

## श्रोत्रम्

श्रोत्रस्याप्यायनं चेष्टं मन्त्राणां श्रवणं यतः।
गुरुभ्योऽश्रुतमन्त्राणां न वीर्यमवकल्पते॥१२४॥

श्रोत्र का आप्यायन मन्त्रादि श्रवणार्थ आवश्यक है। गुरुओं से श्रवण करने पर ही मन्त्रवीर्य होता है।

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ।
न शोभते सभामध्ये हंसमध्ये बको यथा॥१२५॥

गुरुओं के बिना पुस्तक के भरोसे अध्ययन करनेवाला हंसों के बीच में बगलों के समान शोभा नहीं पाता।

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम्।
श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षमवाप्नुयात्॥ १२६॥
श्रुत्वा वेदमथो धर्मजिज्ञासाचार्यचोदिता।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ १२७॥
अधर्मस्यापि जिज्ञासा विचाराख्या श्रुतेर्मता।
निषिद्धकार्यताबुद्धि - र्दुर्मतिर्विनिगद्यते॥ १२८॥

श्रवण से धर्मज्ञान होता है। श्रवण से दुर्मतित्याग होता है। श्रवण से ज्ञान होता है। श्रवण से ही मोक्ष प्राप्ति होती है। वेद श्रवणोत्तर धर्मजिज्ञासा की कर्तव्यता बतायी है। न्याय के साथ अनुसन्धान करने पर ही ठीक धर्मज्ञान होगा। अधर्म का भी ज्ञान श्रवणोत्तर विचाररूप जिज्ञासा से होता है। निषिद्ध को करने योग्य समझना दुर्मति है।

ननु स्वयंपठनतो ज्ञानं नूनं प्रजायते।
न्यायश्च जैमिनीयादिः शक्यते पठितुं स्वयम्॥ १२९॥
शिष्टाचारान् विलोक्यापि लभन्ते धर्मसन्मतिम्।
श्रवणावश्यकार्यत्वं कथं तस्माद्धि सिध्यति॥ १३०॥
सत्यं सामान्यधर्मास्तु शक्या बोद्धुं तथा नरैः।
यागादिधर्माः शक्यन्ते कर्तुं न श्रुतिमन्तरा॥ १३१॥
कृता अपि न कल्पन्ते सफलत्वाय तेन हि।
वीत्येष उपसर्गोऽयं विजानातिपदे कृतः॥ १३२॥

स्वयं पढने पर भी तो धर्म ज्ञान होता है। जैमिनीयादि न्याय को भी स्वयं पढ सकते हैं। शिष्टाचार देखकर भी धर्मज्ञान पाया जा सकता है। श्रवण की अवश्य कर्त्तव्यता कैसे सिद्ध होगी? बात सत्य है। सामान्य धर्म तो वैसे जाना भी जा सकता है, किया भी जा सकता है। परंतु यागादि धर्म सवेद श्रवणं बिना नहीं हो सकता। करने पर भी सफल नहीं होगा। इसलिये वि उपसर्ग है वि-जानाति।

मास्तु स्वर्गादिजनक-धर्मज्ञानादिकं तथा।
सामान्यधर्ममात्रेण जन्मादि सुधरिष्यति॥ १३३॥

स्वर्गादिजनक धर्म का ज्ञान एवं निष्पादन न हो, हम को स्वर्गादि नहीं चाहिये। उसकी निन्दा भी की है। सामान्य धर्म के करने से ही जन्म सुधर सकता है।

**मैवं न जन्ममरणसन्तानस्तेन नो भवेत्।**
**नानायोनिषु जन्मादि-दुखं नैव निवर्तते॥१३४॥**

उ. - बात सही नहीं है। सामान्य धर्म करने मात्र से जन्म मरण परम्परा की निवृत्ति नहीं होगी। नाना योनियों में जन्म लेकर दुःख संसार में भटकना ही होगा।

**ननु ज्ञानाय बहुधा प्रयतिष्यामहे वयम्।**
**तच्च धर्मप्रवृत्ताना-मप्यावश्यकमेव नः॥१३५॥**

प्र. - जन्म-मरण परम्परा से छुटकारा पाने के लिये ज्ञानसंपादनार्थ हम प्रयत्न करेंगे। धर्मनिष्ठों को भी अन्त में वहीं आना ही पडेगा।

**मैवं विविदिषन्त्येतं यज्ञेनेति श्रुतत्वतः।**
**यज्ञोऽपि हेतुस्त्येवं वेदनादौ न संशयः॥१३६॥**

उ. - पर, 'विविदिषन्ति यज्ञेन दानेन तपसा' ऐसा श्रुति कहती है अतः यज्ञ करना भी आवश्यक है। वह श्रवण से ही हो सकता है।

**यज्ञदानादिकेष्वन्य-तमेनास्त्विति चेन्न तत्।**
**वैकल्पिकत्वाश्रवणात् त्रयाणां कार्यता यतः॥१३७॥**

पू. - यज्ञ-दान-तप से एक-दो से ही विविदिषा या वेदन संपादन हो। नहीं। श्रुति में विकल्प नहीं बताया है।

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।**
**इत्थं भगवताप्येवं त्रयाणां कार्यतोदिता॥१३८॥**

गीता में भी यज्ञ-दान-तप तीनों की अवश्य कर्तव्यता बतायी है।

**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।**
**ब्रह्मग्रहणयोग्या हि ब्राह्मीत्येतेन भण्यते॥१३९॥**

पांच महायज्ञ एवं अन्य यज्ञों से ब्रह्मग्रहणयोग्यता स्मृतियों में बतायी हैं।

गुरोरधीतवेदस्य यज्ञादावधिकारिता ।
श्रुत्वा धर्मं विजानातीत्येतत् सुष्ठूदितं ततः ॥ १४० ॥

गुरु से अधीतविदों को ही यज्ञादि में अधिकार हैं। अतः श्रुत्वा धर्मं विजानाति यह कहा।

अधर्मे धर्मधीर्मा भून्मा धर्मेऽधर्मधीश्च भूत्।
जातापि त्यज्यते सद्भिः श्रुत्वा सम्यक्छ्रुतिस्मृती ॥ १४१ ॥

अधर्म को धर्म न समझ ले और धर्म को अधर्म, कदाचित वैसा समझा तो उसे त्यागें यह श्रुति स्मृति श्रवण से संभव है।

श्रुतीनां श्रवणाल्लिङ्गैः षड्भिर्ज्ञानं च जायते।
असंप्रदायविन्नैव लभते ज्ञानमुत्तमम् ॥ १४२ ॥

छह लिंगों से श्रुति श्रवण करने पर ही ज्ञान होता है। असंप्रदायी को उत्तम ज्ञान नहीं होता।

गुरुमेवाभिगच्छेत् स तद्विज्ञानार्थमत्र हि।
एवकारादनाचार्यविद्या व्यावर्तिता श्रुतौ। ॥ १४३ ॥

'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' यहां एवकार (गुरु के ही पास जाये ऐसा) कहकर आचार्य के बिना विद्या प्राप्ति का व्यावर्तन किया है।

तत्त्वमस्यादिवाक्योत्थसाक्षात्कारो हि मोक्षदः।
शब्दशक्तेरचिन्त्यत्वात्ततस्तच्छ्रवणं मतम् ॥ १४४ ॥

तत्त्वमसि आदि वाक्य से उत्पन्न साक्षात्कार ही मोक्षदायी है। शब्दशक्ति अचिन्त्य होती है अतः उसी का श्रवण इष्ट है।

श्रोत्रस्याप्यायनं तत्र श्रवणायास्त्यपेक्षितम्।
तत्प्रार्थ्यतेऽत्र च श्रोत्र-माप्यायत्विति योजना ॥ १४५ ॥

श्रवणार्थ श्रोत्र के आप्यायन की प्रार्थना है। श्रोत्रं मम आप्यायतु ऐसी योजना है।

श्रोत्रं प्रपद्य इत्येषोपासना बलकारिणी।
श्रोत्रं नित्यमुपासीत भक्त्या दिग्देवतात्मना ॥ १४६ ॥

श्रोत्रं प्रपद्ये इस मन्त्र में श्रोत्रोपासना बतायी है। वह श्रोत्रा-

प्यायन में शक्तिकारिणी है। श्रोत्र को दिग्देवतारूप से उपासना की जाती है।

ननु दिग्देवता केय-मेका वा बह्व एव वा।
बह्वो बहुत्वनिर्देशात् पञ्चीकरणवार्त्तिके॥ १४७॥
एकां वैशेषिकाः प्राहुः पुराणेषु दशेरिताः।
वाराहे शृणु राजन्नि-त्यादिना विस्तरोदिताः॥ १४८॥

पू. - यह दिग्देवता कौन है? वह एक देवता है या बहुत? उ. - पञ्चीकरण वार्त्तिक में वार्त्तिककार ने-'**श्रोत्रमध्यात्मनित्युक्तं श्रोतव्यं शब्दलक्षणम्। अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम्**' ऐसा 'दिशः' बहुवचन प्रयोग करते हैं अतः दिग्देवता बहुत हैं। वैशेषिक एक ही दिक् मानते हैं। बहुत्व को औपाधिक कहते हैं। पुराणों में दस दिशायें बतायी हैं। वराह पुराण में 'शृणु राजन्' इत्यादि प्रारंभ कर विस्तार से उन का वर्णन किया है।

ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते।
चिन्ताऽभून्महती को मे प्रजाः सृष्टाः धरिष्यति॥ १४९॥
एवं चिन्तयतस्तस्य ह्यवकाशं व्रजत्विति।
प्रादुर्बभूवुः श्रोत्रेभ्यो दश कन्या महाप्रभाः॥ १५०॥
पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा।
ऊर्ध्वाध एव षण्मुख्याः कन्या ह्यासंस्तदा नृप॥ १५१॥
तासां मध्ये चतस्रश्च कन्या परमशोभनाः।
ब्रह्मांडमेतत् सुश्रोण्यः शतकोटिप्रविस्तरम्॥ १५२॥
तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा विलम्बथ।
भर्तॄंश्च वः प्रयच्छामि सृष्ट्वा रूपस्विनोऽनघाः॥ १५३॥
यथेष्टं गम्यतां देशो यस्या यो रोचऽतेधुना।
ब्रह्मा ससर्ज तूर्णं तान् लोकपालान् महाबलान्॥ १५४॥
विवाहं कारयामास ब्रह्मा लोकपितामहः।
एकमिन्द्राय स प्रादा - दग्नयेऽन्यां यमाय च॥ १५५॥

निर्ऋताय च देवाय वरुणाय महात्मनें।
वायवे धनदेशाय ईशानाय च सुव्रत।
ऊर्ध्वं स्वयमधिष्ठाय शेषायाधोव्यवस्थिताम्॥ १५६॥

ब्रह्माजी सृष्टि कर रहे थे। उन को चिन्ता हुई प्रजा को कौन धारण करेगा। उस समय उनके श्रोत्र से दस कन्यायें प्रगट हुई-पूर्व, दक्षिण, पश्चिम, उत्तर, ऊर्ध्व और अधः। ऐसी छः मुख्य कन्यायें प्रथम हुई। प्रथम चार कन्याओं के बीच-बीच में चार और कन्याएं भी हुई। ब्रह्माजी ने उनको कहा हे सुन्दरियों! सौ करोड विस्तारवाले ब्रह्माण्ड है वहां जो पसंद है वहां रहो, तुम्हें तेजस्वी पतियों की सृष्टि कर देता हूं। ब्रह्माजी ने लोकपालों की सृष्टि कर उनके साथ विवाह कराया। इन्द्र, अग्नि, यम, निर्ऋत, वरुण, वायु, कुबेर और ईशान को एक-एक कन्या दी। ऊर्ध्व दिशा को स्वयं ब्रह्मा ने अधिष्ठित किया। अधो दिशा शेष भगवान को दी।

ननु चानवक्लृप्तास्तु दिशः सापेक्षवृत्तयः।
काश्या दक्षिणतोऽवन्तिः काञ्च्या उत्तरतः किल॥ १५७॥

पू. - दिशायें निश्चित रूप नहीं है। अवन्ति काशी से दक्षिण है, कांची से उत्तर है।

मैवं ब्रह्माण्डदृष्ट्या हि क्लृप्तस्याता दिशोऽखिलाः।
मध्ये तूपाधिभेदेन स्याद्दिग्व्यवहृतिः पृथक्॥ १५८॥

उ. - बात सही है। ब्रह्माण्ड दृष्टि से दिशायें निश्चित है। बीच उपाधिभेद से दिशा व्यवहार अलग हो जाता है।

सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः।
इति वाक्यादुत्तरा दिगुत्तरध्रुववत् स्थिरा॥ १५९॥
याम्यां तद्विपरीतार्धं दक्षिणध्रुववत्ततम्।
सुमेरुं वामतः कृत्वा प्रागदिशाऽण्डान्तमीक्षितुः॥ १६०॥
अधे तद्विपरीतं च वारुणं पश्चिम भवेत्।
सुमेरुं पृष्टतः कृत्वा पश्यती दक्षिणं समम्॥ १६१॥

याम्यार्धं पृष्ठतः कृत्वा पश्यतः सर्वमुत्तरम्।
इत्युपाधि भिदैकत्र दक्षिणोत्तरते इति॥१६२॥

मेरु पर्वत सब के लिये उत्तर है जैसे आजकल उत्तर ध्रुव। उससे विपरीत स्थान अर्थात् मेरु को पीठ की ओर करके ब्रह्माण्ड का छोर देखने पर जो स्थान आता है वह याम्य-दक्षिण है, जैसे दक्षिण-ध्रुव। सुमेरु बायीं ओर करके खडे हो तो सामने की छोर पूर्व है। दाहिनी ओर करके खडे हो तो सामने की छोर तक पश्चिम है। बीच की ओर किस ओर पीठ करके देख रहे हैं उस पर आधारित है।

दुर्गादिवदिमाश्चिन्त्याः शक्तिरूपाः सतेजसः।
श्रोत्रे तादात्म्यबुद्ध्या च तदीयाप्यायनं भवेत्॥१६३॥
देवतानुगृहीताः स्युः समर्था इन्द्रियादयः।
अनुग्रहश्च तद्भक्त्या तत्सत्ता ह्यैतदर्थ्यतः॥१६४॥

दुर्गा लक्ष्मी आदि के समान ये शक्तिरूप हैं, तेजस्विनी हैं। श्रोत्र में इन का तादात्म्य चिन्तन से श्रोत्राप्यायन होगा। क्या यह सब निरर्थक कल्पना मात्र नहीं है? नहीं। देवतानुगृहीत होने पर ही इन्द्रियादि स्वकार्य समर्थ होते हैं। विशेष अनुग्रह उनका भक्तिपूर्वक चिन्तन से होगा। ऐसा न हो तो वेदान्त शास्त्र में इन देवता का अस्तित्व स्वीकार करना ही निरर्थक एवं अन्ध परम्परा मात्र होगा।

मर्यादातिक्रमे नृणां साक्षिभूता इमा इति।
श्रीधरस्वामिनो व्याख्यन् पञ्चमे हि चतुर्दशे॥१६५॥

ये दिग्दवेता मनुष्य के मर्यादातिक्रमण में साक्षिरूप हैं ऐसा श्रीधरस्वामी ने भागवत पञ्चम स्कन्ध में चतुर्दशाध्याय के नवम श्लोक में व्याख्या की है।

अनुग्रहीतृता सर्वस्वीकृता देवतास्वतः।
मर्यादारक्षणद्वारा श्रोत्राप्यायनतोऽस्तु सा॥१६६॥

देवता अनुग्राहक है यह सर्वसम्मत है। मर्यादा साक्षी मर्यादारक्षण द्वारा श्रोत्राप्यायन से वह प्रकृत में होगा। अतः कोई विरोध नहीं।

# अथो बलम्

बलाप्यायनमप्येव शरीरादेरपेक्षितम्।
न लभ्यो बलहीनेन सोऽयमात्मेति गीः श्रुतेः॥१६७॥

शरीरादि बल का आप्यायन भी अपेक्षित है। बलहीन को आत्मा प्राप्त नहीं होती ऐसी श्रुति है।

शारीरं बलमप्येष्यं परिप्रश्नेन सेवया।
न चाशुश्रूषवे वाच्य-मित्यादि स्मृतिदर्शनात्॥१६८॥

शरीर बल के बिना सेवा शुश्रूषा नहीं होती। उसके बिंना विद्या नहीं दी जाती।

द्वारमाहुर्महत्सेवां विमुक्तेरित्यपि स्मृतिः।
शरीरबलहीनस्तु स्वसेवां कारयिष्यति॥१६९॥

महत्सेवा को मुक्ति द्वार बताया है। शारीर बलहीन अपनी सेवा करायेगा।

नन्वाप्यायन्तु मेऽङ्गानीत्येतेनैतद्गतार्थता।
बाह्याङ्गपुष्टिरुक्ता प्रा-गिहान्तर्बलमुच्यते॥१७०॥

शरीर बल की प्रार्थना आप्यायन्तु ममाङ्गानि से गतार्थ है। नहीं। वहां बाह्याङ्ग पुष्टि विवक्षित है। यहां आन्तरिक बल पुष्टि की प्रार्थना है।

हृदो बलमिहार्थ्यं वा तथा चाह हरिः स्वयम्।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप॥१७१॥
अस्त्यङ्गपुष्टिः पार्थस्या-ऽसीदन् गात्राणि तस्य तु।
हृच्छैथिल्ययप्रयुक्तं तस्माद्धृद्बलमर्थ्यते॥१७२॥

अथवा हृदय बल की यह प्रार्थना है। क्षुद्रहृदय दौर्बल्य छोडने भगवान ने भी अर्जुन को कहा। अर्जुन की अङ्गपुष्टि में कोई कमी नहीं थी। फिर भी कहने लगे-मेरे गात्र अवसन्न हो रहे हैं। वह हृदयशैथिल्यसे प्रयुक्त ही था।

व्युत्थानमेषणाभ्यश्च हृद्बलादेव शक्यते।
इयादरण्यमित्याह पादौ न चलतः परम्॥१७३॥

उत्तिष्ठत प्राप्य वराननुबोधत जाग्रत।
भवोत्थानं गुरौ वासः समाधिश्च बले सति॥ १७४॥

पुत्रादि एषणात्रय से व्युत्थान हृदय बल से ही शक्य है। 'अरण्यमियान्' श्रुति कहती है। किन्तु अरण्य जाने के लिये पांव आगे नहीं बढते। उतिष्ठत जाग्रत इत्यादि श्रुति है। संसारजाल से उठना, गुरु सांनिध्य में रहना, फिर समाधिरूप परम जागरण पाना बल के बिना नहीं हो सकता। हृदय बल चाहिये।

पाण्डित्यं प्राप्य बाल्येन तिष्ठासेदिति च श्रुतिः।
पाण्डित्यं श्रवणं प्राप्तुर्विधत्ते मननादिकम्॥ १७५॥

'तस्मात्पाण्डित्यं निर्विध बाल्येन तिष्ठासेत्' यह श्रुति से श्रवणरूप पाण्डित्य प्राप्त करनेवालों के लिये मननादिका विधान करती है।

बलस्य भावो बाल्यं चाऽनात्मदृष्टितिरस्कृतिः।
तस्मान्मननमेवेति संप्रदायविदो विदुः॥ १७६॥
मौनं न मननं किन्तु निदिध्यासनमीरितम्।
बलशब्देन प्रकृते ग्रहीतुं तच्च शक्यते॥ १७७॥

भाष्य में बलस्य भावो बाल्यं ऐसी व्युत्पत्ति कर अनात्म दृष्टितिरस्कारण अर्थ किया। वह मनन ही है ऐसा संप्रदायवेत्ता कहते हैं। उस के आगे मौन बताया वह निदिध्यासन है। बल शब्द से शान्ति मन्त्र में उसका ग्रहण भी शक्य है।

यतो यतो निश्चरति मनस्तच्च नियम्यते।
बलादेव बलं तस्मान्निदिध्यासनमेव तत्॥ १७८॥

ध्यानकाल में जहां जहां से यह चंचल मन निकलता है वहां वहां से उसे वापिस आत्मा में लाना बल से ही संभव है वही निदिध्यासन भी है।

## इन्द्रियाणि च सर्वाणि

इन्द्रियाणि तथान्यानि ममाप्यायन्तु सर्वशः।
सर्वेषामुपकारो हि ब्रह्मज्ञाने प्रवर्तते॥ १७९॥

चक्षु एवं श्रोत्र से अन्य इन्द्रिय भी आप्यायित हो। ब्रह्मज्ञान में सब का उपकार है।

**इन्द्रियं हीन्द्रलिङ्गं स्या-दिन्द्रेण परमात्मना।**
**दृष्टं सृष्टं तथा जुष्टं दत्तं चेत्याह पाणिनिः॥१८०॥**

इन्द्र-परमात्मा का लिंग, दृष्ट, सृष्ट, एवं दत्त होने इन्द्रिय नाम है।

**इन्धो हि ब्रह्मनामेदं तमिन्धं त्विन्द्रमाजगुः।**
**तद्भासा भासमानानि खानि यान्त्यस्य लिङ्गताम्॥१८१॥**

'इन्धी-दीप्तौ' इन्ध ब्रह्म का नाम है। परोक्षतया इन्द्र कहने लगे। उसी इन्द्र के प्रकाश से दीप्त होने से इन्द्रिय हैं। वह दीप्ति परमात्मा का लिङ्ग अनुमापक है। जैसे प्रातः वस्तुओं की प्रकाशमानता से सूर्योदय का अनुमान होता है।

**सर्वस्येन्द्रेण दृष्टत्वात् को विशेषोऽस्मदिन्द्रिये।**
**शृणु चेतनवत्तत्स्याद् येनस्मिन्नात्मधीर्भवेत्॥१८२॥**

सारा जगत इन्द्र दृष्ट हैं-आत्मप्रकाशित है। इन्द्रियों में क्या विशेषता है। सुनो। इन्द्रियां चेतनवत् होती है जिससे उस में आत्मत्व भ्रम होता है।

**ननु चेतनवत्तावत् शरीरमपि भासते।**
**तन्न प्रकाशनं कुर्या-दिन्द्रियं न पुनस्तनुः॥१८३॥**

चेतन प्रकाशित शरीर भी तो चेतनवत् भासता है। इन्द्रियों में क्या विशेषता? नहीं। इन्द्रिय अर्थप्रकाशन करती है। शरीर नहीं।

**ज्ञानशक्तिः क्रियाशक्तिरिति द्वय्यात्मनीरिता।**
**आद्या ज्ञानेन्द्रिये दृष्टा दृष्टा कर्मेन्द्रियेऽपरा॥१८४॥**
**मलिनाऽमलिनौ भागौ अन्तःकरणयोगिनौ।**
**क्रिया ज्ञानं च भवतस्तत्रात्मप्रतिबिम्बतः॥१८५॥**
**ज्ञानशक्तिः स्फुटेक्ष्येत ज्ञानेन्द्रियमुपागता।**
**कर्मशक्तिः स्फुटेक्ष्येत कर्मेन्द्रियमुपागता॥१८६॥**

ज्ञानशक्ति और क्रियाशक्ति आत्मा में हैं। ज्ञानेन्द्रिय में ज्ञानशक्ति और कर्मेन्द्रिय में कर्मशक्ति अनुभव की जा सकती है। दर्पण में एक ओर

मलिन और दूसरी ओर शुद्ध हो वैसे अन्तःकरण में दो भाग हैं। उन में क्रिया और ज्ञान का प्रतिबिम्ब पडता है जो कर्मेन्द्रिय और ज्ञानेन्द्रिय में स्फुट अनुभूत होती है॥

बाह्यक्रियात्मना बाह्यस्फूर्त्यात्मना च ते।
बहिरिन्द्रियमागत्य स्पष्टं भातः शरीरिणाम्॥१८७॥

बहिरिन्द्रियों में आकर बाह्यक्रिया एवं बाह्य स्फुरणरूप से लोगों को भासित होती है।

अक्ष्णाभिवीक्ष्यते वस्तु स्वोपेत प्रतिबिम्बतः।
इन्द्रियेणेक्ष्यते चात्मा स्वेतततत्प्रतिबिम्बतः॥१८८॥

आंख में आगत प्रतिबिम्ब से वस्तु (घटादि) का प्रत्यक्ष होता है। अपने में आये प्रतिबिम्ब (आत्म प्रतिबिम्ब) से आत्मा का दर्शन होता है।

ननु चानुमितेस्तौल्याद् भेदः को लिङ्गदृष्टयोः।
शृण्वाद्येऽनुमितिः स्पष्टा प्रत्यक्षमिव चापरा॥१८९॥
दर्शनश्रवणादिर्न सुप्तस्याऽपि तु जाग्रतः।
श्रोत्रस्य श्रोत्रमित्यादि तत आत्मानुमीयते॥१९०॥

इन्द्रलिङ्गमिन्द्रदृष्टं इन दो में क्या फरक है? दोनों में अनुमान ही काम करता है। सुनो प्रथम में अनुमान स्पष्ट है। द्वितीय में प्रत्यक्ष जैसा है। सोया आदमी के कान-आंख प्रत्यक्ष है। किन्तु सुप्त व्यक्ति न देखता है और न सुनता है अतः जरूर श्रोत्र का भी कोई श्रोत्र है, नेत्र का भी कोई नेत्र है। वही आत्मा है ऐसा श्रवणादि लिङ्ग से आत्मा का अनुमान होता है।

द्वितीये चक्षुरायातं प्रतिबिम्बं हि वीक्ष्यते।
तदेव वस्तुज्ञानं च प्रत्यक्षमिव तत्ततः॥१९१॥
अक्षणा समीक्ष्यते वस्तु स्वागतप्रतिबिम्बतः।
इन्द्रियेणेक्ष्यते चात्मा - स्वेतततत्प्रतिबिम्बतः॥१९२॥

इन्द्र दृष्ट में, चक्षु आदि में आया हुआ प्रतिबिम्ब जो देखते है वही वस्तु ज्ञान है। वह प्रत्यक्षसा होता है। अपने में आये हुए घटादि प्रतिबिम्ब

से वस्तु दिखती है। इन्द्रिय में आये हुए आत्म प्रतिबिम्ब से आत्मदर्शन है।

**किं चास्तिभातिरूपेण प्रत्यक्षं सच्चिदादिकम्।**
**परिछिन्नात्मना भागत्यागाच्छुद्धात्मदर्शनम्॥१९३॥**

दूसरी बात यह है कि अस्तिभातिरूप से सच्चिदानन्द आत्मा घटादि परिच्छिन्नरूप से प्रत्यक्ष है। घटादि भागत्याग से ही शुद्धात्म दर्शन होता है।

**अनाप्यायितदृक् पश्येत् सकलं कामिनीमयम्।**
**आप्यायिताक्षो वीक्षेत्त सर्वं ब्रह्ममयं जगत्॥१९४॥**

अनाप्यायित दृष्टिवाला जगत को कामिनीमय देखता है। आप्यायित चक्षुवाले समस्त जगत् को ब्रह्ममय देखता है।

**इन्द्रसृष्टत्वहेतोश्च चक्षुरादिकमिन्द्रियम्।**
**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च॥१९५॥**

इन्द्र परमात्मा से सृष्ट होने से भी इन्द्रिय है। **'एतस्माज्जायते'** इत्यादि श्रुति है।

**ननु सर्वं जगदिदम् इन्द्रसृष्टं भवेदिति।**
**इन्द्रिये को विशेषोऽस्ति येनास्यैवेन्द्रियाख्यता॥१९६॥**

पू. - समस्त जगत् इन्द्र (ब्रह्म) सृष्ट है तो सभी इन्द्रिय क्यों नहीं? केवल श्रोत्रादि को क्यों इन्द्रिय कहते हैं?

**स्वस्वोपादानसम्बन्ध-संयमाद् दिव्यमिन्द्रियम्।**
**जायमानं परं मूलं गमयेत् सदपत्यवत्॥१९७॥**
**दिव्यं श्रोत्रं भवेच्छ्रोत्राकाशसम्बन्धसंयमात्।**
**दिव्यं चक्षुस्तथा चक्षुस्तेजःसम्बन्धसंयमात्॥१९८॥**
**पराञ्चि खानि व्यतृणत् कः पराग्दर्श्यतो जनः।**
**ऐक्षत प्रत्यगात्मान-मावृत्ताक्ष इति श्रुतिः॥१९९॥**

उ. - अपने-अपने उपादान के साथ जो सम्बन्ध उस में संयम करने से इन्द्रियां दिव्य होकर मूल तक पहुंचायेगी जैसे उत्तम पुत्र है। **'श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्'** ऐसा पातञ्जल सूत्र है। तुल्यन्यायं से चक्षुस्तेजसोः सम्बन्धसंयमाद्दिव्यं चक्षुः इत्यादि समझना

चाहिये। यह बात प्रायः सभी व्याख्याताओं ने बताया है। दिव्यश्रोत्र उत्तरोत्तरोपादन सम्बन्ध से आत्मा पर्यन्त जाकर आत्मा का अवगमन करायेगा। वैसे अन्य इन्द्रियां भी है। इसीलिये श्रुति में कहा-'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्।'

इन्द्रसृष्टत्वतो हीन्द्रो मूलोपादानमुच्यते।
तदीक्षित्रिन्द्रियं दिव्यं तत्स्वसम्बन्धसंयमात्॥ २००॥

इन्द्र सृष्टं कहने से इन्द्र इन्द्रियोपादान सिद्ध होता है। उसके साथ इन्द्रिय सम्बन्ध संयम करने से इन्द्रिय दिव्य होकर इन्द्रेक्षिता (ब्रह्मदर्शक) बनेगा।

इन्द्रियाप्यायनादेव स्यात्तत्सम्बन्धसंयमः।
ततश्चाप्यायनं तेषामिन्द्रियाणमिहार्थ्यते॥ २०१॥

इन्द्रियाप्यायन से ही सम्बन्ध संयम होगा। अतः उसकी यहां प्रार्थना की जा रही है।

इन्द्रजुष्टं तथा सर्व-मिन्द्रियं कार्यदर्शनात्।
कार्यं प्रकाशनं तच्च विशेषेणाक्ष्णि दक्षिणे॥ २०२॥

इन्द्रिय इन्द्रजुष्ट (ब्रह्मसेवित) भी है। क्योंकि प्रकाशन कार्य इन्द्रियों में देखा जाता है। विशेषरूप से दाहिनी आंख में प्रकाशन कार्य रहता है।

प्रीतिसेवनयोः प्राह जुषिं श्रीपाणिनिर्मुनिः।
प्रसन्नता भवेत् प्रीत्या प्रसन्नं ब्रह्म चाक्षणि॥ २०३॥
प्रीतियुक्ते प्रसन्नो हि स्थाने सर्वोऽपि दृश्यते।
अन्यत्र मलिनप्रायो न तु वस्तुस्वरूपतः॥ २०४॥
वीक्ष्यो दशरथः कुत्र कैकेय्यावासतौ तथा।
वीक्ष्यं ब्रह्म प्रसन्नं क्व सर्वेषां दक्षिणेऽक्षणि॥ २०५॥
स्थानमाप्यायितं चेत् स्यात् सुप्रसन्नं न संशयः।
घटादिषु सदप्येव ब्रह्म स्यान्मलिनायितम्॥ २०६॥

**'जुषी प्रीतिसेवनयोः'** ऐसा धातुपाठ है। प्रीति हो तो प्रसन्नता होगी। दाहिनी आंख में ब्रह्म प्रसन्न है। अन्यत्र प्रायः मलिन सा होता है। दशरथजी कहां दिखेंगे? कैकेयी के भवन में। क्यों? वहां प्रीति है। ब्रह्म कहां दिखेगा? दाहिनी आंख में और स्थान आप्यायन हो तो कहना क्या। वहां प्रसन्न ही नहीं, सुप्रसन्न दि़खेगा। घटादि में भी ब्रह्म है। किन्तु मलिनरूप से मिलेगा।

**सर्वत्र वीक्ष्यते ब्रह्म ह्यस्तिभातिप्रियात्मना।**
**परं मलिनरूपेणे-तीन्द्रियाप्यायनं जगौ॥ २०७॥**

पूरे जगत में अस्ति भाति प्रियरूप से ब्रह्म दिखता है। किन्तु मलिनरूप से। इसलिये इन्द्रियाप्यायन बताया जहां प्रसन्नतारूप से ब्रह्म दिखे।

**आप्यायितेष्विन्द्रियेषु मनस्याप्यायिते तथा।**
**यत्र यत्र मनो याति तत्र तत्र परं पदम्॥ २०८॥**
**यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत्।**
**यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत्॥ २०९॥**
**लभते नासया यद्यत् तत्तदात्मेति भावयेत्।**
**जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत्॥ २१०॥**
**त्वचा यद्यत् स्पृशेद्योगी तत्तदात्मेति भावयेत्।**
**इति श्रुतीरितं सर्व-मिन्द्रियाप्यायनाश्रयम्॥ २११॥**

इन्द्रिय एवं मन आप्यायित होने पर जहां भी मन जाये वहीं परम पद दिखता है। चक्षु से जो देखे, श्रोत्र से जो सुने, नासिका से जो सूंघे, जिह्वा से जो रसास्वाद करे, त्वचा से जो छुए सब आत्मा ही यह धारण इन्द्रियाप्यायनाधीन है।

**श्याममैक्षिषत श्यामवासनाप्यायितेक्षणाः।**
**गोप्यः, सन्तः, परं ब्रह्मवासनाप्यायितेक्षणाः॥ २१२॥**

वृन्दावनवासी गोपियां श्याम वासना से आप्यायित चक्षु होने से 'जित देखे तित श्याममयी है' बोलने लगी। सन्तलोग ब्रह्म वासना से आप्यायित

नेत्रवाले होने से 'सर्व ब्रह्म' बोलने लगते हैं।

लिङ्गं सम्बन्धसामान्यात् सम्बन्ध्यस्तित्वबोधकम्।
पिपीलिकाण्डचरणं भाविवृष्ट्यनुमापकम्॥ २१३॥
स्वसत्तानन्यसत्ताकं स्वसृष्टं मुद्घटो यथा।
मृत्सत्तानन्यसत्ताको घटादिः सृज्यते मृदा॥ २१४॥
सत्ता न जायते नित्या मृत्सत्ताविर्भवेद् घटे।
समानदेशवृत्तित्वा-दिति युक्तं मनीषिणाम्॥ २१५॥
नन्विन्द्रेणैव सृष्टत्वाद् घटादिः स्यात्तवेन्द्रियम्।
मैवं मृदादिद्वारा सा मृदाद्याधिक्यतोऽपि च॥ २१६॥

सामान्य सम्बन्ध से सम्बन्धी का अस्तित्व मालूम हो वह लिङ्ग है। जैसे चींटियों के अणु संचरण भाविवृष्टि का लिङ्ग है। लिङ्गिसत्ता से अनन्य सत्ता होने पर इन्द्र सृष्ट होगा। जैसे मृत्तिका सत्ता से अनन्य सत्तावाला घट मृतिकासृष्ट है। सत्ता की उत्पत्ति नैयायिक भी नहीं मानते। अतः मृत्सत्ता घट में आविर्भूत होना उचित है। क्योंकि दोनों का समान देश है। प्रश्न होगा-इन्द्र सृष्ट घटादि भी इन्द्रिय होगा। नहीं। मिट्टी आदि के द्वारा यह इन्द्र सृष्ट है किन्तु साक्षात् नहीं। दूसरी बात घटादि में मिट्टी आदि का ही वर्चस्व है।

इन्द्रियं ज्ञानजनकमिन्द्रप्राधान्यतावशात्।
न घटादि तथात्यन्तजडत्वादिति सन्मतम्॥ २१७॥

इन्द्रियां इन्द्र प्रधान होने से ज्ञानजनक है। घटादि नहीं। वह अत्यन्त जड है। इन्द्र=आत्मा।

मदीयचितितादात्म्यान्मया दृष्टो घटो भवेत्।
तथेन्द्रचितितादात्म्यादिन्द्रदृष्टं किलेन्द्रियम्॥ २१८॥
नन्विन्द्रदृष्टं भुवनमिन्द्रियं ते भविष्यति।
मैवं विशेषचितिमत् प्रकाशकरमिन्द्रियम्॥ २१९॥

मैंने घट देखा - यहां घट में मद्दृष्टता मद्दृष्टि तादात्म्य है। इन्द्रिय इन्द्र दृष्ट है वहां इन्द्रदृष्टितादात्म्य है। शंका होगी - सारा जगत इन्द्रदृष्ट होने से

इन्द्रिय होगा। नहीं। इन्द्रियों में इन्द्रचिति विशेषतः है। अतएव इन्द्रिय ज्ञान प्रकाशकारी है। घटपटादि घटित जगत ज्ञान प्रकाशदायी कहां है?

**जुष्टमानन्दरूपत्त्वात् प्रीतमिन्द्रेण सेवितम्।**
**दक्षिणाक्षि विशेषेण तथान्यानीन्द्रियाण्यतः॥२२०॥**

'जुषी प्रीतिसेवनयोः' के अनुसार जुष्ट का प्रिय और संवित अर्थ है। दक्षिणाक्षि विशेषरूप से इन्द्र का प्रिय और सेवित है। अन्य इन्द्रियां भी उसको प्रिय है सेवित है। अतः ये सब इन्द्रिय कहलायी।

**सच्चिदानन्दतादात्म्यादिन्द्रियत्वं ततः स्थितम्।**
**इन्द्रियाप्यायनात् सच्चिदानन्दावाप्तिरञ्जसा॥२२१॥**

उक्त व्युत्पत्ति से (इन्द्र सृष्ट, इन्द्र वृष्ट और इन्द्र जुष्ट) होने से इन्द्रियां सच्चिदानन्दरूप है। इन्द्रियों का आप्यायन होने पर सच्चिदानन्द की प्राप्ति सरलता से होगी।

**इन्द्रेण दत्तं तेनास्य भवेदादरणीयता।**
**महद्भिर्दत्तमल्पं चाप्यादरार्हं यतो मतम्॥२२२॥**

इन्द्रेण दत्तं यह अन्तिम व्युत्पत्ति दिखायी है। इन्द्र दत्त होने से इन्द्रिय आदरार्ह है। महापुरुष छोटी वस्तु भी दे तो वह प्रसादरूप आदरार्ह होता है। यह इन्द्रिय महोपकारक है। महद् ब्रह्म का दत्त है। इसका समादर होना ही चाहिये।

**तच्च दत्तं भगवता सद्बोधाय दयालुना।**
**इन्द्रियैस्तेन लब्धव्यो बोध इन्द्रस्य धीमता॥२२३॥**

इन्द्र (परमात्मा) ने आपको इन्द्रियां क्यों दी? अपना परमार्थ स्वरूप बोधार्थ। इसलिये इन्द्रियों से परमात्म बोध ही बुद्धिमान को पाना चाहिये।

**ननु भोगार्थमेवेदं दत्तं भगवतेति चेत्।**
**किं तदुक्त्या फलं शान्ति-पाठो भोगाय नेष्यते॥२२४॥**

इन्द्रियां भोगार्थ भगवान ने दी ऐसा क्यों नहीं। नहीं। ऐसा कहने पर यहां क्या फायदा? यह शान्तिपाठ भोगार्थ पढा नहीं जा रहा है।

ननु भोगाद्भवेन्नृणां नैष्कर्म्यमिति चेन्न तत्।
अनादिकालभोगेन किं नैष्कर्म्यमभूत्तवा?॥२२५॥
भगवद्बोधतश्चैव नैष्कर्म्यं लभते नरः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे इति श्रुतेः॥२२६॥

यह कहें कि भोग से भी कर्मनाश और नैष्कर्म्य होगा। नहीं। अनादिकाल से भोग करते आ रहे हो। आज तक नैष्कर्म्य हुआ? भगवद्बोध से नैष्मकर्म्य होता है। श्रुति है-उस परमात्मदर्शन से कर्म क्षय होता है।

यथेष्टमुपयुङ्क्ष्वां तद् दत्तत्वान्नान्तरायता।
माऽऽथा दुरुपयोगं तु न दास्यति पुनर्न सः॥२२७॥

इन इन्द्रियों का उपयोग कर सकते हो। इन्द्र ने दिया तो बीच में वह अडचन नहीं डालेगा। किन्तु दुरुपयोग न करो। दुबारा वह देगा नहीं यह ख्याल रखना।

प्रेष्याय शिशिरे स्वामी प्रेम्णैवोर्णापटं ददौ।
सोऽग्नौ प्रज्वाल्य हस्तौ स्वौ तापयन्नाप तत्सुखम्॥२२८॥
परं द्वितीयवारं तु जीर्णं वस्त्रं स दास्यति।
न वा दास्यति कस्मात्तद्? अतदर्हो हि दुर्मतिः॥२२९॥

भृत्य को सेठ ने ठंडी के दिन प्रेम से ऊन का कपडा दिया। नौकर ने ठंडी में उसे आग में डालकर हाथ सेका और आनन्द पाया। क्या सेठ दुबारा उसको ऐसा कीमती वस्त्र देगा? वह पुराना कपडा देगा, शायद वह भी नहीं देगा। क्यों? वह दुर्मति भृत्य मूल्यवान कपडे का योग्य नहीं है।

नादाय्यश्लीलविषय - दर्शनश्रवणादये।
इन्द्रेण हीन्द्रियं स्वीय-दर्शनायैव मन्मते॥२३०॥

जो श्री को (ब्रह्म विद्या को) लानेवाली नहीं ऐसे अश्लील विषयों के दर्शन-श्रवणादि के लिये इन्द्र (परमात्मा) ने इन्द्रियां नहीं दी किन्तु स्व (परमात्म) दर्शन पर्यवसायी श्रवण दर्शनादि के लिये ही ऐसा हम मानते हैं।

**रत्नस्थाल्यां पचत्येष जर्तिलान् चन्दनेन्धनैः।**
**अर्कमूलाय खनति स्वर्णलाङ्गलतो भुवम्॥ २३१॥**
**कर्पूरतरुखण्डैश्च कुरुते कोद्रवावृतिम्।**
**भोगान् भुङ्क्ते तपोऽकृत्वैवेन्द्रियैर्यो नराधमः॥ २३२॥**

रत्नजडित बर्तन में जंगली तिल को यह भून रहा है सो भी चन्दन की लकडी इंधन बनाकर जलाता हुआ, यह आकड की जड खोद निकालने के लिये कपूर के वृक्ष को काटकर वाड लगा रहा है, कौन? तप न कर इन्द्रियों से अश्लील भोगों को जो नराधम भोग रहा है।

**मन्यन्ते ये तु मनस इन्द्रियत्वं महाशयाः।**
**इन्द्रियाणीत्यनेनैव संग्रहस्तस्य जायते॥ २३३॥**

मन को जो इन्द्रिय मानते हैं उनको इन्द्रियाणि से मन संग्रह होगा।

**तदनिन्द्रियतावादे प्राणोक्त्या तस्य संग्रहः।**
**मनो यजुः साम प्राणमित्यत्र विवृतं पुरा॥ २३४॥**

मन को जो इन्द्रिय नहीं मानते उनके मत में मनो यजुः प्रपद्ये सामं प्राणं प्रपद्ये इन सांनिध्य से प्राण से मन का संग्रह या उपलक्षण जानना चाहिये।

**विषयो नोदितो येषामुपास्तौ देवतैव सः।**
**तदेतत्सायणाचार्यभाष्योक्त्या प्रतिपादितम्॥ २३५॥**

उपासना का विषय जहां नहीं कहा वहां तत्तद्देवता ही विषय हो सकता है यह सायणाचार्य भाष्यानुसारेण हमने पहले बताया।

**उत्कर्षाधिक्यतः कर्तुं पाणिपादादिकेऽपि च।**
**इन्द्रविष्ण्वादिदृष्टिश्च शक्याऽऽप्यायनहेतवे॥ २३६॥**

अधिक उत्कर्षार्थ पाणि-पादादि में इन्द्र-विष्णु आदि की दृष्टि कर उपासना भी तत्तदाप्यायनार्थ की जा सकती है।

**उपासनार्थमेवैता देवताः श्रुतिषूदिताः।**
**अन्यथा कथनं तासां निष्प्रयोजनतामियात्॥ २३७॥**

इन देवताओं का श्रुतियों में वर्णन इन्द्रियादि में तदुपासनार्थ ही है।

अन्यथा नद्यास्तीरे पञ्च फलानि के समान व्यर्थ कथन मात्र होगा।

## सर्वं ब्रह्मौपनिषदम्

**सर्वंब्रह्मौपनिषद-मित्येषाऽऽप्यायनान्मतिः।**
**यच्चौपनिषदं ब्रह्म परं ब्रह्म तदेव तु॥२३८॥**

अंग एवं वागादि के आप्यायन का जो कार्य गुरु सेवा श्रवणादि योग्यता है उसका चरम फल यह सारा जगत ब्रह्म ही है ऐसा ज्ञान ही है। कौनसा ब्रह्म? औपनिषद ब्रह्म। ब्राह्मणादि को भी ब्रह्म कहते हैं वह नहीं।

**वेदानुवचनाद् यज्ञाद् दानात्तं तपसापि च।**
**विप्रा विविदिषन्तीति तज्ज्ञानं सर्वतोऽधिकम्॥२३९॥**

'तमेतं वेदानुवचनेन' इत्यादि से वेदाध्ययन यज्ञ दान एवं तपस उसे जानने की इच्छा करने को बताया है। अर्थात् सर्वाधिक श्रेष्ठ वही ब्रह्म ज्ञान है।

**दृष्टं ह्युपनिषत्स्वेव ब्रह्मौपनिषदं ततः।**
**द्रष्टुं चोपनिषद्भिस्तच्छक्यं तेनापि तत्तथा॥२४०॥**

'उपनिषदि दृष्टं' उपनिषदों में देखा गया ब्रह्म है। वही औपनिषद है। उपनिषदों में ही जो देखा जा सकता है वह औपनिषद है।

**ननु लौकिकवाक्यैश्च ज्ञानं संभवतीति चेत्।**
**ज्ञानं संभवतीत्यस्तु दर्शनं तु न संभवेत्॥२४१॥**

लौकिक वाक्यों से भी तो ब्रह्म का ज्ञान होगा। ज्ञान होगा, किन्तु ब्रह्म का दर्शन नहीं होगा।

**दर्शनं श्रुतिवाक्यैश्च नेक्ष्यते बहुधा श्रुतैः।**
**सत्यं किन्त्वन्यसामग्रीविरहातु तथा नृणाम्॥२४२॥**

बहु प्रकार से श्रुतिवाक्य श्रवण से भी तो दर्शन देखने में नहीं आता है। बात सत्य है। अन्य सामग्री के न होने से नहीं हो पा रहा है।

**नन्वेवं निरपेक्षत्वं व्याहन्येत श्रुतेस्तव।**
**मैवं कार्यं न भवति सति हि प्रतिबन्धके॥२४३॥**

मायाविना ह्यक्षिबन्धे पुरःस्थोऽपि स नेक्ष्यते।
प्रतिबन्धापनीतौ च संमुखं सोऽभिवीक्ष्यते॥ २४४॥
मायाऽभावो ननु तदा दर्शने कारणान्तरम्।
तन्नाभावो न हेतुः स्यादवस्तुत्वादिति स्थितिः॥ २४५॥

यदि सामग्री के न होने से कार्य न हुआ तो श्रुति सापेक्ष हो जायेगी। नहीं। प्रतिबन्धक हो तो कार्य नहीं होता है। मायावी ने नेत्रबन्ध किया तो स्वयं वह सामने खडा है तो भी नहीं दिखता। तो यों कहिये कि प्रतिबन्धक मायादि का अभाव भी कारण है। नहीं। अभाव अवस्तु है। वह कारण नहीं हो सकता। प्रतिबन्धक कार्य के होने में अडचन डालता है।

पाके किं कारणं ब्रूहि ज्वलनः कारणं मतम्।
मन्त्रजापे कथं नैषः मन्त्राभावोऽपि कारणम्॥ २४६॥

पाकदाहादि में क्या कारण है? अग्नि। मन्त्र जप होने पर पाक क्यों नहीं होता? मन्त्राभाव भी कारण है।

ऋगाद्यभावः किं? मन्त्रः विशेषाभाव उच्यते।
गण्यन्तां तर्हि मन्त्रास्ते दुर्गणास्ते बहुत्वतः॥ २४७॥

सभी वेद मन्त्रों का अभाव कारण है क्या? नहीं। खास खास मन्त्रों का अभाव कारण है। गिनकर बताओ। गिनना संभव नहीं क्योंकि वे बहुत हो सकते हैं।

प्रतिबन्धक सामान्याभावं वक्ष्यामि कारणम्॥ २४८॥

प्रतिबन्धक सामान्याभाव को हम कारण कहेंगे।

नानौषध्यादिकानां चाऽभावानुगमनं ततः।
भविष्यति ततो हेतु-ज्ञानं सुकरमेव मे॥ २४९॥

नाना औषधि, नाना मणि आदि के अभाव का प्रतिबन्धाभावत्वेन संग्रह होने से कारणज्ञान सुलभ है।

शृणु भो कारणीभूत-विरह प्रतियोगि हि।
प्रतिबन्धकमित्युक्तं प्रतिबन्धकवेदिभिः॥ २५०॥

अभावे हेतुताबोधे बुध्येत प्रतिबन्धकम्।
प्रतिबन्धकबोधेऽस्या-ऽभावे हेतुत्वनिश्चयः॥ २५१॥
इत्यन्योन्याश्रयत्वेन दुर्घटो हेतुनिश्चयः।
हेतुधीविरहे हन्त प्रवृत्तिः कथमुच्यताम्॥ २५२॥

सुनिये - प्रतिबन्धक का लक्षण है - कारणीभूताभावप्रतियोगित्वम्। मण्यभाव कारण है दाह का। उसका प्रतियोगी मणि प्रतिबन्धक है। प्रथम मण्यभाव को कारण पर रखो। तब प्रतिबन्धक का पता लगेगा। प्रतिबन्धक का पता पहले लगाओ तब प्रतिबन्धकाभाव कारण है यह मालूम पडेगा। इस प्रकार अन्योन्याश्रय होने से प्रतिबन्धकता और कारणता दोनों का ज्ञान न होने से प्रवृत्ति नहीं होगी।

अग्न्यादि कारणं पाके लौकिकं स्वानुभूतिगम्।
अभावस्तु न नो हेतुर्न तदर्थं तु यत्यते॥ २५३॥
अग्न्यादिकं समाहृत्य पाके यत्नो विधीयते।
आगतः प्रतिबन्धश्चापाकर्तुं यत्यते लघु॥ २५४॥
प्रतिबन्धकमेष्यच्च ज्ञातं चेन्निजिघांस्यते।
एवं चानियतत्वेन यत्क्लृप्तं तद्धि कारणम्॥ २५५॥

दाह पाकादि में अग्नि आदि कारण है यह लोक प्रसिद्ध है, स्वानुभूतिगम्य भी है। अतः अग्नि आदि संपादन में यत्न निश्चित है। अभाव हेतु न होने से मण्यभाव मन्त्राभावादि संपादनार्थ कोई यत्न नहीं करता। हां प्रतिबन्धरूप से आ गया तो हटाने का प्रयास करेंगे। प्रतिबन्धक आनेवाला है जानने पर भी उसको हटाने की चेष्टा करेंगे। अर्थात् अनियत होने से जो क्लृप्त (निश्चित है) वही कारण है तत्संपादनार्थ ही यत्न होता है।

विघातकं वा कार्यस्यानुत्पत्तौ वा प्रयोजकम्।
प्रतिबन्धकमस्माकं नैव तत्रातिचिन्त्यते॥ २५६॥
यदीयाद्बाधकस्तर्हि द्रक्ष्यामीत्येव चिन्तयेत्।
लोकः प्रवर्तते कार्ये न त्वेवं हेतुसंग्रहे॥ २५७॥

आपने भी प्रतिबन्धक माना तो अभाव में कारणता मान लिया, क्योंकि कारणीभूताभाव प्रतियोगी ही प्रतिबन्धक है। नहीं। प्रतिबन्धक माने कार्य को बिगाडनेवाला या कार्यानुत्पत्ति में प्रयोजक है। उस पर अति चिन्ता नहीं होती। प्रतिबन्धक आया तो देखा जायेगा इतना सोचकर लोग कार्य शुरू करते हैं। कारण तो कार्य के लिये जरूर ही संपादित करना होगा।

**नहियु र्भिक्षव इति न स्थाली श्रीयते बुधैः।**
**इति चाभाणकोऽभावकारणत्वं व्यपोहति॥ २५८॥**

'भिखारी आयेंगे इसलिये चूल्हा न चेताओ' ऐसा नहीं होता। भिखारी आना चूल्हा जलाने में प्रतिबन्धक है क्योंकि अनाज सीमित है। सब का पेट भरेगा नहीं। अनाज ज्यादा खर्चा होने का भय है। परंतु फिर भी चूल्हा जलायेंगे ही। भोजन न हो तो जीवन नहीं होगा। परंतु भिखारियों का आगमनाभाव स्थालीश्रयण में कारण नहीं है। कारण हो तो भोजन बनेगा नहीं, भूखे मरेंगे।

**ननु निर्वह्निताज्ञानेऽप्यग्निधीः पर्वते भवेत्।**
**तदभावस्य हेतुत्वाभावात् सत्यं क्वचिद्भवेत्॥ २५९॥**
**अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।**
**ह्रदोऽग्निमानिति गिरा बोधो बाधेऽपि जायते॥ २६०॥**
**तज्ज्ञानानुद्भवे तत्र स्थापनानवबोधनात्।**
**निगृहीतोऽप्रतिभया प्रतिपक्षी भवेद् ध्रुवम्॥ २६१॥**

पू. - यदि बाधाभाव कारण नहीं है तो पर्वत में वह्नि नहीं है ऐसा बाध (प्रतिबन्धक) के होने पर भी पर्वतो वह्निमान यह ज्ञान को होगा। सच्ची बात है। होगा क्या, होता है। शब्द से अत्यन्त असत् का भी बोध होता है ऐसा आचार्यों ने श्लोक वार्त्तिकादि में बताया है। ठीक है। ह्रद में वह्नि नहीं है। फिर भी वादी ने ह्रदो वह्निमान बोल दिया तो आपको कुछ बोध होगा कि नहीं? यदि बोध नहीं हुआ तो खण्डन कैसे करेंगे? कुछ समझ में नही आया तो अप्रतिभा नामक निग्रह स्थान से आप निगृहीत होंगे। अतः बाध ज्ञानाभाव ह्रदो वह्निमान इस (झूठे ही सही) वाक्य से

होनेवाले ज्ञान में कारण नहीं है।

ब्रह्म ह्युपनिषन्मात्रसाक्षात्कार्यं भवेदिति।
आहौपनिषदं ब्रह्मेत्यपरिच्छिन्नमद्वयम्॥ २६२॥
प्रतिबन्धकसद्भावे कार्यं प्रायो न जायते।
न साक्षात्क्रियते तेन कृतेऽपि श्रवणे परम्॥ २६३॥
ब्रह्मदर्शनलाभे च पापादि प्रतिबन्धकम्।
पापापहरणार्थं च यज्ञो दानं तपो मतम्॥ २६४॥
यज्ञं दानं तपश्चैव पावनानि जगौ हरिः।
वेदानुवचनं चैव प्रथमं चरमं तथा॥ २६५॥
स्वाध्यायश्रवणं तावत् प्रथमं कारणं भवेत्।
तत्त्वमस्यादिवाक्यानां चरमं श्रवणं भवेत्॥ २६६॥
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययमयदुराग्रहः।
विषयासक्तिरित्येते ज्ञानस्य प्रतिबन्धकाः॥ २६७॥
तेषां हानावुपनिषद्वाक्येन ब्रह्मदर्शनम्।
तस्मादुपनिषन्मात्रवेद्यं ब्रह्मेति निश्चयः॥ २६८॥

ब्रह्म का उपनिषत् से ही साक्षात्कार हो सकता है। इसलिये 'ब्रह्मौपनिषदं' ऐसा अपरिच्छिन्न अद्वैत ब्रह्म के लिये कहा। तो उपनिषत् श्रवण करते ही ब्रह्म साक्षात्कार क्यों नहीं होता? प्रतिबन्धक पाप के रहने से प्रायः नहीं हो पाता। उन पापों के नाशार्थ यज्ञ, दान और तप को गीता में कर्तव्य बताया। तमेतं वेदानुवचनेन इसे श्रुति में अधिक कहा। प्रथम तथा अन्तिम वही साधन बताया है। स्वाध्यायमधीयीत यह प्रथम कहा। अन्त में कहा-द्रष्टव्यः श्रोतव्यः। तत्त्वमसि आदि का अन्तिम श्रवण है। बुद्धिमान्द्य कुतर्कशीलता, विपरीतार्थ का दुराग्रह और विषयासक्ति ये भी प्रतिबन्धक है। इन प्रतिबन्धकों के प्रायः हटने पर ब्रह्मदर्शन उपनिषद् वाक्य से होगा।

वर्तेते ननु भो याव-ज्जीवनं पुण्यपाप्मनी।
सुखदुःखेक्षणान्नृणां प्रारब्धमुभयात्मकम्॥ २६९॥

**प्रतिबन्धकसद्भावात् कथं स्याद् ब्रह्मदर्शनम्।**
**मैवमुक्तं न हेतुस्तु प्रतिबन्धकशून्यता॥ २७०॥**
**यज्ञादिपुण्यबाहुल्यात् पापं शैथिल्यमाप्नुयात्।**
**तदा पापं तिरस्कृत्यो-पनिषद् ब्रह्म दर्शयेत्॥ २७१॥**

पू. - यज्ञदानादि कुछ भी करो लेकिन पाप सर्वथा निवृत्त नहीं होगा। यावत्जीवन पुण्यपाप रहेंगे। सुख-दुःख ज्ञानी-अज्ञानी सबके देखने में आते हैं। प्रारब्ध पुण्य-पाप उभयात्मक है। तब प्रतिबन्धक पाप के होने से ब्रह्मदर्शन जीवन में कैसे होगा? (मरने के बाद मोक्ष की बात छोडो।) **'इह चेदवेदीदथ सत्यमस्ति'** बताया है। यहीं ब्रह्मदर्शन होना चाहिये। सुनो। इसीलिये हम प्रतिबन्धकाभाव को कारण मानने के खिलाफ बोलते आ रहे है। यज्ञादि पुण्य भारी होने पर पाप शिथिल हो जायेगा। तब तत्त्वमसि आदि वाक्य पाप को तिरस्कृत कर ब्रह्मदर्शन करायेगा।

**भोगेऽबोधे चाद्यभेद-कल्पनायां तु गौरवम्।**
**एकस्यैवेक्ष्यते नाना-फलं शास्त्रेषु कर्मणः॥ २७२॥**

तार्किक लोग तर्क करेंगे-दुःखभोगकारक पाप अलग है, बोध प्रतिबन्धक पाप अलग है। अतः दुःख को देखकर बोध प्रतिबन्धक रहा कहना अनुचित है परंतु यह तर्क मात्र है। कल्पनागौरव है। एक ही कर्म के अनेक परिणाम पुराणों में वर्णित है। ब्रह्महत्यादि पाप से अमुक को श्रवणादि जपादि करने पर भी हरिदर्शन नहीं हुआ, उसी से नाना रोग हुए इत्यादि।

**बोधबाधकमेनस्तु यावज्जीवं प्रवर्त्स्यति।**
**न भोगस्तत्फलं येन शाम्येद्रोगादिदुःखतः॥ २७३॥**

बोधबाधक पाप अलग है तो उसका पूरा जीवन अनुवर्तन होगा। रोगादि दुःखभोग से उसका शमन नहीं होगा। प्रारब्ध होने से एक जीवन अन्त में शायद नष्ट हो। अथवा जन्मजन्मान्तर में भी वह बाधा करता रहे। या फिर एक क्षण बाध करके दूसरे क्षण में नष्ट हो और तीसरे क्षण में बोध हो किन्तु ऐसा कभी देखा नहीं गया।

बोधबाधकमप्येव भोगनाश्यं भवेत्ततः।
भोगोऽपि तत्फलमिति प्रागुक्तं हि समञ्जसम्॥ २७४॥

इसलिये जो बोधप्रतिबन्धक पाप है वह भोगनाश्य मानना होगा। अतएव रोगादि दुःखभोग भी उसका फल है ही।

निराह भगवांश्चैव गहना कर्मणो गतिः।
अतो यज्ञादयः कार्याः पापशैथिल्यहेतवे॥ २७५॥
शिथिलान्यसमर्थानि प्रतिबन्धुं धियं सतः।
नश्यन्त्यपि यथाकाले तस्मिन्दृष्टे परावरे॥ २७६॥

भगवान ने भी अन्त में यही निर्वचन किया कि कर्म की गति गहन है, दुरूह है। इसलिये यज्ञादि पापशैथिल्यार्थ करना चाहिये। पाप शिथिल होने पर ज्ञान बन्धन में असमर्थ होंगे। तब ब्रह्मदर्शन होने पर 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इस श्रुति के अनुसार कर्म क्षीण और नष्ट हो जायेंगे।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।
धनशुद्धिश्च दानेनासद्धनादन्नदूषणम्॥ २७७॥
मनसोऽशुद्धिरन्नात् स्या-न्मनो ह्यन्नमयं श्रुतम्।
दोषोद्भवनिवृत्त्यर्थं दानमेव निरूपितम्॥ २७८॥

यज्ञों से तनशुद्धि विशेष रूप से होती है। दान से धनशुद्धि एवं तद् द्वारा अन्नशुद्धि एवं मनशुद्धि होती है। क्योंकि अन्नमय मन माना है। अन्य दोषोत्पत्ति निवारणार्थ भी धनशुद्धि आवश्यक है (विविदिषुको फलान्तरेच्छा नहीं हो सकती)।

जातदोषनिवृत्तिश्च मनसस्तपसा भवेत्।
तपोभिः क्षीणपापानामित्याहाचार्यतल्लजः॥ २७९॥

आगामी मनोदोष निवृत्यर्थ दान है। उत्पन्न मनोदोष निवृत्यर्थ तप है। तप से जिन का पाप क्षीण हुआ ऐसा आचार्यों ने स्वप्रसंग में बताया है।

एवं क्षीणेषु दोषेषूपनिषच्छ्रवणाद् भवेत्।
ब्रह्मसाक्षात् कृतिस्तस्माद् ब्रह्मोपनिषदं मतम्॥ २८०॥

इस प्रकार दोषक्षय से शुद्ध चित्त पुरुष उपनिषत श्रवण करता है तो उसको ब्रह्म साक्षात्कार होता है। अतः उसे औपनिषद ब्रह्म कहा।

**ननुचोपनिषत्प्रोक्त-मित्येवार्थोऽत्र भण्यताम्।**
**मैवं यतः परं ब्रह्म पुराणादिष्वपीरितम्॥२८१॥**
**न चापरमपि ब्रह्म पुराणादौ निरूपितम्।**
**हिरण्यगर्भप्रभृतिः श्रुतावपि निरूपितः॥२८२॥**
**श्रुतेः परमतात्पर्यं ब्रह्मण्येवेति चेन्मतम्।**
**पुराणादेश्च तत्रैव तात्पर्यं परमं मतम्॥२८३॥**
**इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्।**
**इत्युक्तेस्तद्विरुद्धार्थे तात्पर्यं हि तयोः कथम्॥२८४॥**

औपनिषदं का उपनिषत् कथित इतना ही अर्थ क्यों नहीं? इसलिये कि पुराणादि में भी ब्रह्म का वर्णन है। पुराणादि में सगुण ब्रह्म का भी वर्णन है, उसकी व्यावृत्ति के लिये विशेषण हो सकता है। नहीं। उपनिषदों में हिरण्यश्मश्रुः हिरण्यवर्ण इत्यादि में सगुण ब्रह्म का वर्णन है। श्रुति का परम तात्पर्य सगुण ब्रह्म में नहीं परब्रह्म में ही है कहते हैं तो पुराणादि का भी परम तात्पर्य परब्रह्म में ही है। इतिहास एवं पुराणों से वेदार्थोपबृंहण करने के लिये स्मृतियों में कहा। तब श्रुति विरुद्ध सगुण परम तात्पर्यता पुराणों की कैसे मानी जायेगी?

**तस्मादुपनिषद्भिर्हि यस्य साक्षात्कृतिर्भवेत्।**
**तदेवात्रौपनिषदमित्युक्तं ब्रह्म साशयम्॥२८५॥**

इसलिये उपनिषदों से ही जिसका साक्षात्कार हो वही औपनिषद शब्द से कहा है। विशेष अभिप्राय हृदय में रखकर ब्रह्म को यह विशेषण दिया है।

**तं त्वौपनिषदं पृच्छा-मीति वाजसनेयिनाम्।**
**तन्नामनुत शाकल्योऽनधीतोपनिषत्त्वतः॥२८६॥**

याज्ञवल्क्यजी ने 'तत्त्वौपनिषदं पृच्छामि' कहा परंतु उपनिषत् श्रवण न होने से शाकल्य समझ नहीं सके।

ननु शब्दः कथंकारं साक्षात्कारं तु कारयेत्।
सत्यं नित्यापरोक्षत्वाद् दशमस्त्वमसीतिवत्॥ २८७॥

शब्द कैसे साक्षात्कार करायेगा? प्रश्न मार्के का है। किन्तु आत्मारूपी ब्रह्म नित्यापरोक्ष होने से 'दशमस्त्वमसि' इस वाक्य जैसे स्व साक्षात्कार होता है वैसे तत्त्वमसि आदि से साक्षात्कार हो जायेगा।

तर्हि लौकिकवाक्येन साक्षात्कारः कथं नहि।
सुदृढद्वैतसंस्काराऽऽवेशादिति विभाव्यताम्॥ २८८॥
यथा दिग्भ्रमसंस्कारात् प्राचीवेक्ष्येत पश्चिमा।
तथाहंकार संस्काराद् बृहद् ब्रह्माल्पमीक्ष्यते॥ २८९॥
जीवो ब्रह्मेति वाक्यानां शतशः श्रवणेऽपि च।
परिच्छेदाऽपरित्यागाद् ब्रह्म साक्षात् न वीक्ष्यते॥ २९०॥

यदि ब्रह्म नित्यापरोक्ष है तो लौकिक वाक्य से भी साक्षात्कार क्यों नहीं होता? सुदृढ द्वैत संस्कार के आवेश से। जैसे दिग्भ्रम संस्कार से पूर्व को पश्चिम और पश्चिम को पूर्व देखने लगते हैं वैसे परिच्छेदक अहंकार संस्कार से अपरिच्छिन्न ब्रह्म को अल्प (परिच्छिन्न) देखने लगते हैं। जीव ब्रह्म है इत्यादि लौकिक वाक्य सैंकडों बार सुनने पर भी परिच्छेद न छूटने से ब्रह्म साक्षात्कार नहीं हो पाता।

ननु भो तत्त्वमस्यादेः शतशः श्रवणेऽपि च।
न जायते ब्रह्मसाक्षात्कृतिस्तुल्यमिदं श्रुतौ॥ २९१॥

पू. - यह बात तो तत्त्वमसि आदि में भी समान है। सैंकडो बार 'तत्त्वमसि' आदि महावाक्य सुनने पर भी ब्रह्म साक्षात्कार नहीं होता। परिच्छिन्न अहंकार संस्कार दोनों जगह बराबर है।

शृण्वाऽऽवेदानुवचना-ऽऽनिदिध्यासनसाधनैः ।
संस्कृते स्यान्महावाक्यै-र्ब्रह्मसाक्षात्कृतिर्हृदि ॥ २९२॥

सुनो 'तमेतं वेदानुवचनेन' से लेकर 'निदिध्यासितव्यः' तक बताये हुए साधनों से संस्कृत मन में ही तत्त्वमस्यादि वाक्यों से साक्षात्कार होता है।

ननु लौकिकवाक्यैश्च चित्ते साधनसंस्कृते।
स्याद् ब्रह्मसाक्षात्करणमिति किं नोपगम्यताम्॥ २९३॥
भगवद्वार्त्तिकाचार्यैरेतद् हेतुतयोदितम्।
शब्दशक्तेरचिन्त्यत्वात् श्रौतः शब्दो विवक्षितः॥ २९४॥

चित्त यज्ञदानादि से संस्कृत होने पर लौकिक वाक्यों से भी ब्रह्म साक्षात्कार मानने में आपको क्या हर्ज है? इस पर वार्त्तिककार भगवत्सुरेश्वराचार्य का कहना है कि शब्द शक्ति अचिन्त्य होती है। शब्दशक्ति माने श्रौत शब्दों की शक्ति।

अत्रौपनिषदं ब्रह्मेत्युक्तिर्मानमिहेक्षितम्।
तं पृच्छाम्यौपनिषदं पुरुषं त्वेत्यपि श्रुतिः॥ २९५॥

श्रौत शब्दों की ही शक्ति ऐसा क्यों? इसलिये कि यहीं पर श्रुति ब्रह्मौपनिषदं बताया। तथा तत्त्वौपनिषदं पुरुषं पृच्छामि ऐसा बृहदारण्यक में भी बताया। उभयत्र औपनिषदं यह विशेषण उपनिषत्-मात्र-वेद्यता को लेकर ही सार्थक बनता है।

मन्त्रायुर्वेदवद् वेद-गिरः प्रामाण्यमब्रवीत्।
तत्र तत्र यथार्थक्रमनुभूमैव गौतमः॥ २९६॥

गौतम ऋषि भी 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यं' ऐसा कहकर समर्थन करते हैं। मन्त्र से तथा आयुर्वेद से फल प्रत्यक्ष सिद्ध है वैसे अन्य वेदवचन भी है यह गौतम सूत्र का अर्थ है। क्योंकि दृष्टान्त उभयवादि सम्मत अनुभूत विषयक ही होता है।

एवमेवानुभूयैव शब्दशक्तेरचिन्त्यताम्।
जगाद वार्त्तिकाचार्य इति मन्यामहे वयम्॥ २९७॥

इसी प्रकार श्री सुरेश्वराचार्य भी शब्द शक्ति की अचिन्त्यता एवं अलौकिकता का अनुभव करके ही 'शब्दशक्तेरचिन्त्यत्वात्' कहा ऐसा हम मानते हैं।

ननु भाषासु विद्यन्ते मन्त्रा विषहरादयः।
सत्यं तत्रापि तदनु-वादे शक्तिर्न मन्यते॥ २९८॥

एवं तत्त्वमसीत्यादे-रनुवादे न वर्तते।
शक्तिरित्युररीकारे का नाम तव वेदना॥ २९९॥

पू. - हिन्दी-उर्दू आदि भाषा में भी लोग मन्त्र मानते है और ऐसा मन्त्र बोलकर जहर उतारते हैं, पीलिया रोग मिटाते हैं प्रत्यक्ष है। उ. - बात सत्य है। किन्तु उन्हीं मन्त्रों में पर्यायवाची शब्द जोडें या अनुवाद वाक्य बनाये तो शक्ति नहीं रहती है ऐसी मान्यता है। उसी प्रकार तत्त्वमसि आदि वाक्यों के अनुवाद वाक्य में शक्ति नहीं रहती मानने में आपको क्या तकलीफ है?

भाषामन्त्रं गुरोः श्रुत्वा साफल्यं लभते जनः।
गुरोःश्रुत्वा तत्त्वमसि साफल्यं लभतां कृती॥ ३००॥

भाषा मन्त्र भी गुरु से सुनकर लोग सफलता पाते हैं। वैसे गुरु से तत्त्वमसि सुनकर अधिकारी सफल हो जायेगा।

भाषामन्त्रे क्वचिद्याति साफल्यं नापि च क्वचित्।
मन्त्राद् भावप्रकर्षाद् वा फलं तत्रेत्यनिश्चयः॥ ३०१॥

भाषामन्त्र में कहीं सफलता मिलती है तो कभी सफलता नहीं भी मिलती है। तब फल मन्त्र से हुआ या भावना के प्रकर्ष से यह निश्चय नहीं होता है (पीलिया में मन्त्र से तेल पीला सा होता है किन्तु पीलिया प्रायः मिटता नहीं है)।

संशयस्तत्त्वमस्यादौ श्रुतिप्रामाण्यतो न नः।
क्वचित्फलविलम्बस्तु साधने न्यूनतावशात्॥ ३०२॥

तत्त्वमस्यादि में वैसा संशय नहीं है। क्यों? दृढ श्रुति प्रमाण है। कहीं पर फल में विलम्ब यज्ञदानादि साधनवैकल्य से ही प्रतिबन्धक के कारण ही है।

मदालसादि विदुर-धर्मव्याधादि धीमताम्।
ब्रह्मज्ञानं ननु कथं श्रुतिश्रवणमन्तरा॥ ३०३॥
पुराणादेर्यदि तदा भाषाग्रन्थोदितोऽपि च।
कथं नैवौपनिषद-नियमस्य व्यतिक्रमात्॥ ३०४॥

पू. - मदालसा गार्गी आदि स्त्रियों को और विदुर धर्मव्याधादि महानुभावों को श्रुति सुने बिना ही ज्ञान कैसे हो गया? यदि पुराणादि श्रवण से ज्ञान हुआ तो भाषाग्रन्थों से भी ज्ञान क्यों नहीं होगा? ओपनिषद श्रुति का व्यतिक्रम तो हो ही गया।

**निषादस्थपतिन्यायात् पत्नीमन्त्रादिदर्शनात्।**
**सिद्धमध्ययनं श्रुत्याः स्त्रीशूद्रादेर्न संशयः॥३०५॥**

उ. - निषादादि को यज्ञ कराने की विधि है। याग में यजमान पत्नी को बोलने के लिये कईं मन्त्र आते हैं। अतः श्रुति के अध्ययन में स्त्रीशूद्रादि को भी अधिकार सिद्ध होता है।

**तत्रोपयोगिमन्त्राणा - मधीतावधिकारिताम् ।**
**मीमांसका जगुस्तेन नान्येषामिति वक्षि चेत्॥३०६॥**
**अन्यथानुपपत्त्यैव वक्तव्यं तन्मनीषिणा।**
**अन्यथानुपपत्यैव ब्रह्मज्ञानेऽपि भण्यताम्॥३०७॥**
**ब्रह्मज्ञानमभूद् गार्ग्या मैत्रेय्यादेश्च योषितः।**
**शूद्रस्य विदुरादेश्च तत्र नैवास्ति संशयः॥३०८॥**
**विनोपनिषदं ज्ञानं न चौपनिषदश्रुतेः।**
**तथा चोपनिषद्वाक्य-श्रवणेऽस्त्यधिकारिता॥३०९॥**

निषाद स्थपति याग में उपयोगी मन्त्रों के अध्ययन में ही निषादों को अधिकार है। पत्नी वक्तव्य मन्त्रों के अध्ययन में ही स्त्रियों को अधिकार है अन्य वेदाध्ययन में नहीं ऐसा मीमांसा शास्त्रकार कहते हैं। किस प्रमाण से उतने मन्त्रों में अधिकार आप मान रहे हैं? **'निषादस्थपतिं याजयेत्'** इस श्रुति की अन्यथानुपत्ति से कहते हैं, कहना ही पडेगा, तो उसी अन्यथानुपपत्ति से वेदान्त श्रवण में भी स्त्रीशूद्रादि को अधिकार हम कहते हैं। गार्गी ज्ञानी थी इस में संशय नहीं, बृहदारण्यक उपनिषत् में स्पष्ट है। मैत्रीयी भी याज्ञवल्क्योपदेश से ज्ञानी थी इस में संशय नहीं। तं त्त्वौपनिषदं इस श्रुति से उपनिषद वाक्य से ही ज्ञान होगा यह भी निश्चित है तब गार्ग्यादि के ज्ञानान्यथानुपपत्त्या उपनिषदध्ययन और उसमें अधिकार उनको

सिद्ध होता है।

**ननु व्यक्तिविशेषाणां सिध्येत्तेनाधिकारिता।**
**न स्त्रयादिजातिमात्रस्य सेति चेत्तन्न युज्यते॥३१०॥**
**यतो ह्यनित्यसंयोगाद-प्रामाण्यं श्रुतेर्भवेत्।**
**परं तु शब्दमात्रं तदित्यूचे जैमिनिर्मुनिः॥३११॥**

पू. - विदुर को ज्ञान हुआ तो विदुर को ही अन्यथानुपपत्ति से अधिकार सिद्ध होगा। गार्गी मैत्रेयी आदि को ज्ञान हुआ तो गार्गी मैत्रेयी आदि को उपनिषत अध्ययन से अधिकार रहा यही अन्यथानुपपत्ति से कल्पना होगी, न कि स्त्री जाति को, सबको, शूद्र जाति के सबको। नहीं। ऐसा नहीं होगा। व्यक्तिमात्र का कथन हो तो अनादि अपौरुषेय श्रुति में अनित्य संयोग नहीं होगा। यदि है तो वह सादि होने से उपनिषत् अप्रमाण होगा। अतः स्त्री जाति के और शूद्र जाति के सभी विवक्षित होंगे। महर्षि जैमिनी ने भी व्यक्तिवाचक शब्दमात्र कहकर उत्तर दिया है।

**न च पूर्वभवाधीतसंस्कारोद्भवतो भवेत्।**
**स्वयंप्रभातोपनिषत् तेषामिति च सांप्रतम्॥३१२॥**
**गार्ग्यादेः पूर्वजनुषि पुंस्त्वाधीत्यादिकल्पना।**
**गुर्वी अपि च मैत्रेय्या अत्रैव श्रवणं श्रुतेः॥३१३॥**

गार्गी आदि के पूर्वजन्म में अधीत शास्त्र संस्कार के उद्बोध से उपनिषत स्वयं भासित है इत्यादि कल्पना में गौरव स्पष्ट है। पूर्वजन्म में वे पुरुष रही फिर अध्ययन किया। किसी प्रतिबन्ध से ज्ञान और मोक्ष नहीं हुआ। फिर जन्म लिया इत्यादि ऊटपटांग है। कल्पना है। और मैत्रेयी को अपने इसी जन्म में याज्ञवल्क्य ने उपदेश दिया।

**विज्ञंमन्यो मोपदेष्टाऽसच्छूद्रो भूदतो जगौ।**
**विदुरः श्रुतवाक्योऽपि नाहं तद्वक्तुमुत्सहे॥३१४॥**

सुत्सुजातीय में-धृतराष्ट्र ने प्रश्न किया - अब तक अनुक्त कोई बात रही हो तो सो भी कहो। विदुरजी ने कहा - 'शूद्रयोनावहं जातो नाहं तद्वक्तुमुत्सहे' में शूद्र योनि में पैदा हुआ। अतः उस अनुक्त तत्त्व को कहने

और सत्य परमेश्वर के महा तप से उत्पन्न हुए ऐसे दोनों का उत्पत्तिकथन संगत होता है।

ननु तावत् शास्त्रदृष्टं नरकाद्यपि विद्यते।
कुतस्तद्धि वदिष्यामीत्युच्यतेऽत्र मुमुक्षुणा॥४९१॥
मा हिंस्यान्नानृतं ब्रूयादित्यादिभिरुदीर्यते।
शास्त्रेण नरकादीति तदुक्तिः किं न युज्यते॥४९२॥

मा हिंस्यात् सर्वभूतानि नानृतं वदेत् इत्यादि निषेध वाक्य नरक बोधक है, वह कहना क्यों नहीं चाहिये, जिससे हिंसादि से निवृत्ति हो। अतः नरकादि को वदिष्यामि ऐसा क्यों कहना चाहिये यह प्रश्न नहीं उठता।

किंचर्तमेव वक्ष्येऽहं वक्ष्येऽहं सत्यमेव च।
अन्यव्यावृत्तिरेषा सा न सर्वोक्तिरसंभवात्॥४९३॥

दूसरी बात - ऋतमेव वदिष्यामि सत्यमेव वदिष्यामि ऐसी यहं इतर व्यावृत्ति मात्र है। शास्त्रोक्त अनन्त ऋत एवं लोकसिद्ध अनन्त सत्य कौन बोल पायेगा?

अन्ये पर्यायवचने ऋतसत्यपदे मते।
दार्ढ्यार्थमादरार्थं वा पुनरुक्तिरितीतरे॥४९४॥

दूसरे लोग कहते हैं ऋत और सत्य पर्याय है। दाढ्यार्थ या आदरार्थ द्वि पुनरुक्ति है।

## तन्मामवतु

आविः शब्देन निर्दिष्टं ब्रह्म तत्पदशब्दितम्।
तनोति जगदेतद् यद् तदित्यन्ये विवृण्वते॥४९५॥

आविः शब्द से निर्दिष्ट नित्यापरोक्ष ब्रह्म तत्पद से परामृष्ट है। तनोति जगत विस्तारयति इस अर्थ का तत्पद है ऐसी अन्य व्याख्याता कहते हैं।

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
इति गीतोक्तितश्चैव तत्पदं ब्रह्म निर्मलम्॥४९६॥

ॐ तत्सदिति निर्देशो ब्रह्मणः इस वचन से भी तत् का ब्रह्म अर्थ है।

तन्मां विद्यार्थिनं ब्रह्म सर्वेशोऽवतु रक्षतु।
सर्वकार्यसमर्थत्वात् स हि मां रक्षितुं क्षमः॥४९७॥

मुझ विद्यार्थी की वह ब्रह्म सर्वेश्वर रक्षा करे। सर्व कार्य समर्थ वही मेरी रक्षा कर सकता है।

ननु नात्मावितव्योऽस्ति सोऽविनाशी श्रुतिश्रुतः।
कार्यस्यानित्यताध्रौव्याद् देहादेर्नावनीयता॥४९८॥

पू. - आत्मा को श्रुति ने अविनाशी बताया। उसकी रक्षा क्या हो वह स्वयं रक्षित है। शरीर तो कार्य होने से विनाशी निश्चित है। उसकी भी रक्षा नहीं होगी। तब ये मां कौन है?

उच्यतेऽस्थूलमनणु सर्वधर्मविवर्जितम्।
तत्त्वं यद् वाङ्मनसयोरक्षाणां चाप्यगोचरम्॥४९९॥
एकमेवाद्वितीयं यद् नेह नानास्ति किंचन।
विजानतामविज्ञातं विज्ञातमविजानताम्॥५००॥
सदेवसोम्यवचनात् सद्रूपेण व्यवस्थितम्।
प्रलये सृष्टिकाले च सदैव हि सदेव तत्॥५०१॥
तत्त्वमस्यादितश्चाहं-ब्रह्मास्मीत्यादितोऽपि च।
'सदसत्' सूत्रतश्चैनद् ध्वंसे पर्यवसाययेत्॥५०२॥
श्रुत्या सद् गदितं तत्त्वं नास्तीति ध्वंस ईरितः।
मोहाद् हेत्वन्तराद्वाऽतो रक्षा कार्या मुमुक्षुणा॥५०३॥

उ. - सुनो ब्रह्म का-आत्मा का स्वरूप बृहदारण्कादि में स्थूल अणुत्वादि सर्व धर्म वर्जित बताया। तैत्तिरीय में वाणी और मन का अविषय बताया। छान्दोग्य में एक अद्वितीय नानारहित बताया। मैं जानता हूं ऐसा गर्ववाला जानता नहीं। मैं नहीं जानतावाला जानता है ऐसा कान में कहा। वह असत् है क्या? नहीं, सत ही है ऐसा छान्दोग्य में कहा। सभी पामर और द्वैतवादी ऐसा तत्त्व नहीं है ऐसा जोर से कहते हैं। नहीं है का अर्थ है-असत्। तब ब्रह्म जो सत है उसका असत् होना यह उसका नाश है, ध्वंस है। 'सदसत्' ऐसा वैशेषिक सूत्र है। असत् का सद्भाव उत्पत्ति और

सत् का असद्भाव ध्वंस यह सर्वद्वैतवाद्यादि मत है। अब इस सत् ब्रह्म का कथ्यमान असद् भाव भले मोह से कहें या किसी अन्य हेतु से, वह ध्वंसात्मक हुआ तो उससे रक्षा करना मुमुक्षु के लिये आवश्यक है ही।

श्रुत्युक्तस्य सतो ध्वंसो नूनं मोहनिबन्धनः।
ततो रक्षा तु मोहापसरणात् सत्त्वबोधनम्॥५०४॥

श्रुति ने जिसे सत बताया उसका असत्त्वरूपी ध्वंस निश्चित मोहमूलक है। अतः मोह निवर्तन से सत्त्व को लाना ही उसकी रक्षा सिद्ध होती है।

तथा च श्रुतिराह स्म त्यागेनैवात्मरक्षणम्।
तेन त्यक्तेन भुञ्जीथा आत्मानं द्वैतहानतः॥५०५॥

श्रुति द्वैतत्याग से आत्मरक्षा करने को बता रही है-तेनत्यक्तेन भुञ्जीथाः।

हिंसन्त्यविद्यादोषेण विद्यमानतिरस्कृतेः।
प्राकृता नित्यमात्मानमिति भाष्ये च भाषितम्॥५०६॥

भाष्य में भी यह बात-कथं त आत्मानं नित्यं हिंसन्ति? अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् इत्यादि से निरूपित किया है।

एषणात्रयसंन्यासेनात्मज्ञानैकनिष्ठया।
रक्षितव्योऽयमात्मेति निष्कर्षश्च प्रदर्शितः॥५०७॥

'एषणात्रसंन्यासेनात्मज्ञाननिष्ठतया आत्मा रक्षितव्यः' ऐसा वेदार्थ निष्कर्ष भाष्य में दिखाया है।

शरीररक्षणमपि शक्यं प्रार्थयितुं परम्।
शरीरमाद्यं भवति धर्मसाधनमित्यतः॥५०८॥
शरीरनाशविरहो नहि रक्षणमत्र तु।
किन्तु रोगादिरहितमिष्टकार्योद्भवक्षमम्॥५०९॥
इन्द्रियाणां च बुद्धेश्च रक्षणाशा च युज्यते।
तेषु सम्यक्षु भवति विद्याग्रहणयोगता॥५१०॥

**न च त्रिशान्तिकथनाद्गतार्थमिति सांप्रतम्।**
**विशेषरक्षाविषयप्रार्थनेति विशेषतः॥५११॥**

शरीर को लेकर भी मामवतु कह सकते हैं। शरीर नाशाभाव ही उसका अर्थ नहीं है। दीर्घ जीवित्व निरामयत्वादि कार्य साधक को लेकर प्रार्थना होगी। इन्द्रियरक्षा बुद्धिरक्षा भी इस प्रकार मामवतु का अर्थ हो सकता है। यह कहें त्रिशान्तिकथन से गतार्थ है। नहीं। यह विशेष रक्षण प्रार्थना है।

## तद्वक्तारमवतु

**नन्वत्र क्रियते वक्तुरवनप्रार्थना कुतः।**
**वक्ता हि भवति ज्ञानी स्वात्मानं नैव हन्ति सः॥५१२॥**

पू. - वक्ता की रक्षा की प्रार्थना व्यर्थ है। वक्ता ज्ञानी होता है वह आत्मा को नही मारता।

**मैवं साक्षात्कृतात्मैव वक्तेति नियमो नहि।**
**गुरोरधीतवेदान्तो वक्ता भवितुमर्हति॥५१३॥**

उ.-ऐसी बात नहीं है। आत्मसाक्षात्कारी ही वक्ता हो ऐसा नियम नहीं है। गुरु से वेदान्त का सम्यक् अध्ययन किया वही वक्ता बन सकता है।

**सब्रह्मचारिणोऽप्येव वक्तारः स्युः परस्परम्।**
**श्रवणादिषु पौष्कल्यं भवेत्तेनेति सन्मतम्॥५१४॥**

सब्रह्मचारी (सहपाठी) भी परस्पर वक्ता हो सकते हैं। उससे श्रवणादि में पुष्कलता आयेगी यह सन्त सम्मत है।

**तच्चिन्तनं तत्कथन-मन्योन्यं तत्प्रबोधनम्।**
**एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः॥५१५॥**
**या प्रबोधयिता सोऽयं वक्ता भवितुमिर्हति।**
**नान्यः कश्चिदुपायोऽस्ति परमात्मप्रबोधने॥५१६॥**

ब्रह्माभ्यास में ब्रह्म चिन्तनादि में तत्प्रबोधन वक्तृता को लेकर ही कहा है। तत्कथन से इसलिये पृथक् पृथक् करके बताया। स्वयं अपने

आप बोलना भी तत्कथन है।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यमित्याह भगवानपि॥५१७॥

गीता में भी बोधयन्तः कथयन्तः ये दोनों बातें कहीं।

ननु भक्तिप्रकरणे तद्धि न ज्ञानवर्त्मनि।
न, भक्तिज्ञानयोः शास्त्रे नैवात्यन्तभिदा यतः॥५१८॥

यह गीतावचन भक्तिविषयक है ज्ञानविषयक नहीं। नहीं। भक्ति और ज्ञान में भेद नहीं है।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥५१९॥
इति तत्फलरूपेण ज्ञानमेव समीरितम्।
ब्रह्मप्रवचनस्यापि फलं ज्ञानं सतां मतम्॥५२०॥

भजन का फल ज्ञान ही वहां बताया। वक्ता भी प्रवचन से ज्ञान ही उत्पन्न करता है।

अत्राचार्यमनुक्त्वाह वक्तृत्वं केवलं श्रुतिः।
उभयोर्वीर्यकरणं सहनाववतुश्रुतौ॥५२१॥

आचार्य न कहकर यहां वक्ता मात्र कहा। सहनाववतु श्रुति में वीर्यकरण से स्पष्टता है।

आचार्य आरुणिः पुत्रं श्वेतकेतुं समन्वशात्।
प्रश्नोत्तरमबुध्यन्तं न्यग्रहीत्रं तु जैवलिः॥५२२॥
ते तावुपेयतुर्भूपमिति छान्दोग्यवाक्यतः।
असर्वज्ञोऽपि भवति आचार्य इति गम्यते॥५२३॥

यद्यपि तैत्तिरीय में अवतु वक्तारं का भाष्य में वक्तारम् आचार्यं ऐसा अर्थ किया है। उस अर्थ में भी असंगति नहीं है। क्योंकि आचार्य सर्वज्ञ होता है ऐसा नियम नहीं है। आरुणि ने पुत्र श्वेतकेतु को अनुशिष्ट किया था। फिर पंचालनृपति जैवलि के प्रश्न का उत्तर न दे पाने से अज्ञान निगृहीत हुआ। तब आरुणि ने कहा इसका उत्तर मुझे भी नहीं आता। दोनों

वहां से जैवलि के पास जाकर प्रश्नोत्तर प्राप्त किया ऐसा छान्दोग्य में आया है। इससे निश्चित है कि आचार्य होने पर भी सर्वज्ञ सभी नहीं होते। अतः अवतुवक्तारं ऐसा आचार्य के लिये प्रार्थना करना भी असंगत नहीं है।

**निर्विण्णः श्रोत्रियं ब्रह्म-निष्ठमेवाभिगच्छति।**
**तच्छ्रुतेनत्मिहं तस्य प्रार्थ्यतामवनं कुतः॥५२४॥**

पू. - 'परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्याणिः श्रोत्रियं ब्रह्मनिष्ठम्' इस श्रुति निर्विण्ण विरक्त मुमुक्षु श्रोत्रिय ब्रह्मनिष्ठ के पास ही जायेगा। उसके लिये आत्मरक्षा की प्रार्थना व्यर्थ है। अज्ञान ही आत्महनन है। आत्मज्ञान ही आत्मरक्षण है। ब्रह्मनिष्ठ तो आत्मज्ञानी निश्चित होंगे।

**उच्यते पूर्वसंस्कारः कदाचिज्ज्ञानिनामपि।**
**उद्बुध्यतीति तेनात्महतिर्भरतवद् भवेत्॥५२५॥**
**न चोपासक एवासीद्भरतो नात्मवित्कृती।**
**इति वाच्यं तृतीयेऽस्य ज्ञानं जन्मन्यभूत् कथम्॥५२६॥**
**न वेदानध्यगीष्टासौ पित्रा यत्ने कृतेऽपि हि।**
**पूर्वश्रवणसंस्कार-जन्यं ज्ञानमतोऽभवत्॥५२७॥**
**ज्ञानिनामपि चेतांसि देवी भगवती हि सा।**
**बलादाकृष्य मोहाय महामाया प्रयच्छति॥५२८॥**

उत्तर सुनो। पूर्व संस्कार से कभी कभी ज्ञानियों को भी भरत के समान मोह हो जाता है। यह कहो कि भरत उपासक मात्र था। ज्ञानी नहीं। नहीं। ऐसा होता तो तृतीय जडभरत जन्म में उसको ज्ञान कैसे हुआ। घोर यत्न करने पर पिता उसे गायत्री तक बुलवा नहीं सका था। पूर्वजन्मीय ज्ञान-संस्कार से ही उसे ज्ञानोदय हुआ अतः भरतजन्म में ही उसे ज्ञान हो गया था। किन्तु महामाया ज्ञानियों का भी चित्तहरण कर मोह में डाल देती है।

**ज्ञानं हि पूर्वसंस्काराद् वामदेवादिवद् भवेत्।**
**अतो मा भूत् प्रमादोऽस्येत्युचिता प्रार्थना सतः॥५२९॥**

पूर्व संस्कार से ज्ञान वामदेवादि में देखा है। अतः प्रमादाक्रमण

वारणार्थ प्रार्थना उचित है।

मा विद्विषावहा अत्र प्रोक्तं भाष्यकृतापि च।
प्रमादकृतदोषोत्थद्वेषं मा करवावहै॥५३०॥

मा विद्विषावहै इसकी व्याख्या में भाष्यकार ने भी कहा-प्रमादकृत दोष से उत्पन्न होनेवाला द्वेष हम न करें।

ब्रह्मणः पूर्णसाक्षात्त्वपर्यन्तमवतु प्रभुः।
चित्तस्वास्थ्यादिदानेनेत्यर्थस्तु सरलोऽर्थिनाम्॥५३१॥

ब्रह्म का पूर्ण साक्षात्कार पर्यन्त चित्त स्वास्थ्यादि देकर प्रभु हमारी रक्षा करें यह सभी अर्थी के लिये सरल है।

## अवतु मामवतु वक्तारम्

आदरार्थं विशेषाभिमुख्यार्थं वा प्रभोरिह।
द्विरुक्तिर्बालहठवद् भीतबालाकुलोक्तिवत्॥५३२॥

यहां पुनरुक्ति आदरार्थ या प्रभु को विशषेरूप से अभिमुख करने के लिये है। बालहठ के समान भी द्विरुक्ति है। डरे हुए बालक की आकुलोक्ति समान पतनभीति प्रयुक्त आकुलोक्ति के समान भी है।

सम्यग् बोधं समुद्भाव्या-ऽवतु मां स्वप्रभः प्रभुः।
संसाराम्भोधिपतित - मविद्यातमसावृतम्॥५३३॥

भवसागर से अविद्या तमोमग्न मुझे स्वयं प्रकाश प्रभु बोध उत्पन्न कर रक्षित करे।

प्रभावृद्ध्या तमोनाशो विशेषेणावलोक्यते।
ज्ञानवृद्ध्या तथाऽविद्यानाशश्चैव विशेषतः॥५३४॥

प्रभा की वृद्धि से तम का नाश विशेषरूप से होता है वैसे ज्ञानवृद्धि से अज्ञान नाश भी है।

शक्तयः स्वीक्रियन्ते हि मायायां बहवो बुधैः।
इन्द्रो मायाभिरित्येवं - बहुत्वोक्तिप्रमाणतः॥५३५॥

ज्ञानवृद्धिक्रमेणैव यान्ति ताः क्रमशो लयम्।
तद्वर्धयन्नवतु मां संसारतमसः प्रभुः ॥५३६॥

माया में बहुत सारी आवरणशक्तियां हैं ज्ञानवृद्धि से उनका क्रमशः लय होता है। अतः ज्ञान वृद्धि करते हुए अधिकाधिक तमो नाश कर प्रभु मुझे संसार तम से बचायें।

सत्युत्कर्षे भवेद्विद्या फलपर्यवसायिनी।
परमोत्कर्षमानीय तां मामवतु शंकरः ॥५३७॥

विद्या फलदायिनी तभी होती है जब उसमें उत्कर्ष आ जाये। भगवान मेरी विद्या को अत्युत्कर्ष प्राप्त कराकर मेरी रक्षा करें।

तथा च प्रापयतु तामविद्योच्छेदयोग्यताम्।
रक्षणं निश्चितं येन तदाहाऽवतु मामिति ॥५३८॥

उत्कर्ष प्राप्त कराकर अविद्योच्छेदन योग्यता विद्या में भगवान संपादित करें। यहीं 'अवतु मां' से बताया।

उच्छेदो बीजरूपेणाप्यनवस्थानमुच्यते।
बीजं भवति संस्कारोऽविद्याया बुधसंमतः ॥५३९॥

अविद्योच्छेद में उच्छेद क्या है। बीजरूप से भी न रहना। बीज क्या है अविद्या का? संस्कार ही।

नन्वनादिरविद्याऽस्या बीजं नैवोपपद्यते।
सत्यं नात्यन्तभेदो नः कार्यकारणयोरिति ॥५४०॥

प्रश्न होगा-अविद्या अनादि है उसका कारण नहीं है। बात सत्य है। बीज और कार्य में अत्यन्त भेद न होने से अन्यतररूपेण अनादि है।

यद्वाऽनादिरविद्यैव तदवस्था तु काचन।
वासना स च संस्कारो लेशाविद्येति चोच्यते ॥५४१॥

अथवा अनादि अविद्या ही है। उसकी एक अवस्था वासना या संस्कार है। उसीको लेशाविद्या करके अन्य मनीषी समझते हैं।

कस्तूरीवासना यद्वत् कस्तूर्या सह वर्तते।
अपेतायां च कस्तूर्यां चिरं सा त्ववतिष्ठते ॥५४२॥

नष्टायामप्यविद्यायां वर्ततेऽस्याश्च वासना।
नावतिष्ठेत साप्येव यदोच्छेदः स उच्यते॥५४३॥

कस्तूरी की सुवास कस्तूरी के साथ ही रहती है। कस्तूरी के न रहने पर भी उस स्थान पर सुवास रह जाती है। वैसे अविद्या के नष्ट होने पर भी उसकी वासना रह जाती है। वासना भी खलास होगी तब उच्छेद (अविद्योच्छेद) माना जाता है।

अनन्तशक्तिर्माया सा साङ्गानङ्गा न चोभयी।
अनिर्वाच्या महादेवी किं तत्र बहुचिन्त्यताम्॥५४४॥
विश्वामित्रोऽगमन्मोहं गायत्रीमन्त्रदृङ्मुनिः।
पराशराद्यास्तत्त्वज्ञा नारदाद्याः सुरर्षयः॥५४५॥
तानावीदन्ततो यः सोऽवतु मामादितोऽपि च।
अविद्योच्छेदयोग्यात्म-ज्ञानोद्भावनतः प्रभुः॥५४६॥
तथैवावतु वक्तारं कृत्वाऽद्वैतप्रतिष्ठितम्।
द्वैतभावं विधायैव कृपया मां प्रशासतम्॥५४७॥

माया अनन्त शक्तिमती है। फिर भी साङ्गा नहीं। पर अनङ्गा भी नहीं अनिर्वचनीय भी है। उसके बारे में क्या ज्यादा बोलें। गायत्री द्रष्टा विश्वामित्र को उसीने मोह में डाला। महर्षि पराशर देवर्षि नारदादि को भी। किन्तु अन्ततः जिस भगवान ने उनकी रक्षा की वह आदि से ही अविद्योच्छेदक योग्य ज्ञान को उत्पन्न कर मेरी रक्षा करे। वैसे आचार्य की भी अद्वैत में प्रतिष्ठित कर रक्षा करे, जिन्हों ने कृपा से ही द्वैतात्मक शिष्य गुरुभाव लाकर मुझ शिष्य को ज्ञानानुशासन किया।

## अवतुवक्तारम्

आचार्यस्येष्टसिद्धौ हि मम चाप्युद्धृतिर्ध्रुवा।
इत्यतोऽतिशयार्थाय द्विरुक्तिमकृत श्रुतिः॥५४८॥

आचार्य की इष्ट सिद्धि हो तो मेरा भी उद्धार जरूर होगा। क्योंकि गुरु प्रसन्न होने पर सर्व कार्यसिद्धि होती है अतः अतिशयार्थ पुनः पुनः

अवतुवक्तारं कहा।

मा भूदिष्टकृते क्लेशः संप्रदायप्रवर्तने।
अतश्चावतु वक्तारं तदिष्टं प्रापयन् प्रभुः॥५४९॥

संप्रदायप्रवर्तन महान इष्ट कार्य है। उस इष्ट कार्य में आचार्य को क्लेश न हो एतदर्थ प्रभु आचार्य को इष्ट प्राप्त करा कर-परमार्थस्थिति प्राप्त करा कर रक्षण करे।

## ॐ शान्तिः शान्तिः शान्तिः॥

विघ्ना आध्यात्मिका आधिभौतिका आधिदैविकाः।
तुदन्ति मामतः शान्तिस्तेषां मेऽस्तु गुरोरपि॥५५०॥

आध्यात्मिक आधिभौतिक और आधिदैविक ऐसे तीन प्रकार के विघ्न या उपसर्ग मुझे तंग करते हैं अतः उन तीनों उपसर्ग मेरे शान्त हो एवं आचार्य के भी तीनों उपसर्ग शान्त हो।

ऋग्वेदीयोपनिषद ऐतरेयादयो दश।
तासां वाङ्मनसीत्येतां शान्तिमाहस्य मुक्तिका॥५५१॥

ऐतरेयादि दस उपनिषदें ऋग्वेदीय हैं उनकी वाङ् मे मनसि इत्यादि शान्ति है इस मुक्तिकोपनिषद् वचन से यह ऋग्वेदीय शान्ति सिद्ध होती है।

इति श्रीकाशिकानन्दगिरिणा कृतिना कृतम्।
समाप्तं गतमृग्वेदशान्तिव्याख्यानवार्तिकम्॥५५२॥



# ॐ भद्रं नो अपिवातय मनः।

**ॐ शान्तिः शान्तिः शान्तिः॥**

**भद्रं न इति मन्त्रेऽस्मिन्नग्निरग्रिममन्त्रगः।**
**अपिवातनकर्ता ह्यामन्त्र्यते मन्त्रदर्शिना॥ १॥**

भद्रे नो अपिवातय इस मन्त्र में अपिवातन-(प्रेरण)कर्ता के रूप में अग्रिम मन्त्र में उक्त अग्नि सम्बोध्य है।

**भुजां यविष्ठमीडेऽग्निं शासा मित्रं सुदुर्धरम्।**
**यद्यज्ञो मातुरूधोवत् स्वर्गस्थैरुपजीव्यते॥ २॥**

भुजां=रक्षकों में सबसे तगडे अग्नि की मैं स्तुति करता हूं जो अनुशासन से (यह करो यह न करो इस प्रकार भलाई के शिक्षण से) मित्र है पर दुर्धर है। जिसका यज्ञ स्वर्गस्थ देवताओं का उपजीवन है, जैसे शिशु के लिये मातृस्तन्य।

मूल मन्त्र है - **अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुम्**
**यस्य धर्मन् स्वरेनीः सपर्यन्ति मातुरूधः॥**

पूर्वार्ध लगभग पूर्वोक्तार्थक है। यस्य=जिस अग्नि के धर्मन्=धर्म=यज्ञ में एनी=आनेवाली आहुति स्वः=स्वर्गस्थित देवता सपर्यन्ति=उपजीवन्ति नित्य अपेक्षा रखते हैं। जैसे बच्चे मातुःमाता के ऊधः=स्तन की अपेक्षा रखते हैं। (स्वः का स्वर्गस्थ देवता अर्थ है)

**रक्षन्ति देवता नूनमापत्सु सुहृदादयः।**
**पितरो बान्धवाश्चैव सखायश्च न संशयः॥ ३॥**
**इन्द्रियाणामधिष्ठात्र्यो रक्षन्त्येव च देवताः।**
**दृक्शक्त्यादिप्रदानेन सुज्ञानोद्भावनेन च॥ ४॥**
**रक्षन्त्येते दिविषदो वृष्ट्यन्नादिप्रदायिनः।**
**परस्परं भावयन्तो रक्षन्त्येवं परस्परम्॥ ५॥**
**माता नास्ति पिता नास्ति न सखायो न बान्धवाः।**
**समुपेतान्महामृत्यो रक्षितुं कोपि सक्षमः॥ ६॥**

**भुजां पालयितॄणां तु यविष्ठस्त्वग्निरग्रणीः।**
**स एव सकलाद् दुःखान्मृत्योरपि च रक्षति॥७॥**

इस बात में दो राय नहीं है कि देवता आदि आपदाओं में रक्षा करते हैं कि नहीं। देव भी रक्षा करते हैं। मित्र भी रक्षा करते हैं, मातापिता भी रक्षा करते हैं। बन्धुजन भी रक्षा करते हैं। इन्द्रियादि अधिष्ठात्री देवता भी चक्षुरादि को शक्तिप्रदान से रक्षा करते हैं। स्वर्गस्थ इन्द्रादि देवता अन्न वृष्टि से प्रजा का रक्षण करते है। लोग परस्पर परस्पर की रक्षा भी करते हैं। परंतु ऐसी भी एक अवस्था होती है जहां पर रक्षक रूप में न माता है, न पिता है, न मित्र है, न बन्धु है। वह कौनसी अवस्था है। महा मृत्यु का जब आगमन होता है। उससे रक्षा करनेवाला एक परमात्मा ही है। अतः वह रक्षकों में सर्वश्रेष्ठ रक्षक है। जबर्दस्त जवान है। वही सकल दुःखों से और महादुःख मृत्यु से बचाता है। उसी को मन्त्र में अग्नि बताया। अग्नि का अर्थ है-अग्रणी। रक्षकों में वह अग्रणी है।

**अग्निःकस्मादग्रणीः स इति यास्को निरब्रवीत्।**
**सर्वेषामग्रणीरात्मा कारको भासकस्तथा॥८॥**

अग्निः कस्मादग्रणीर्भवति ऐसा निरुक्त है। सबका परमात्मा अग्रणी है, कारक है, भासक भी है।

**तस्मिन्नपो मातरिश्वा दधाति सकलं जगत्।**
**तमेव भान्तमनुभात्यस्य भासा विभाति च॥९॥**

इसी परमात्मा के अस्तित्व में और नेतृत्व में सूत्रात्मक प्राण कर्म-विभाजन करता है, जगत्-धारण करता है। प्रथम वही भासता है, उसके पीछे सब भासते हैं। उसके प्रकाश से सब प्रकाशित होते हैं।

**अग्रणीत्वाद् भवेदग्निरग्रे स्वं नीयते स्वयम्।**
**प्रकाशः प्रथमं भाति तदन्तर्वस्तु भासते॥१०॥**

अपने को हमेशा स्वयं आगे रखता है अतः अग्नि है। पहले प्रकाश प्रकाशेगा, तब उसमें वस्तु प्रकाशेगी।

**स्वयं सन् जगदेतद्धि स्वस्मिन् भावयतीश्वरः।**
**स्वयं प्रकाशमानश्च प्रकाशयति वै जगत्॥ ११॥**

प्रथम ही आत्मा सद्रूप होकर बैठा है तब जगत् को बनाता है, सद्रूप करता है, स्वयं प्रकाशमान होता है तब जगत को प्रकाशित करता है।

**अयं सन्नममानः सन्नङ्गं नयति सर्वशः।**
**यास्को महामुनिः श्रीमानित्यप्यग्निं निरब्रवीत्॥ १२॥**

अङ्गं नयति संनममानः ऐसी भी निरुक्ति महामुनि श्री यास्क ने की है।

**तत्सृष्ट्वा हि तदेवानुप्राविशत् परमेश्वरः।**
**अनुप्रविशतः सर्वमङ्गत्वं प्रतिपद्यते॥ १३॥**
**नमन् प्रविशति द्वारं सूक्ष्मः सन्नितिलौकिकम्।**
**गृहमङ्गं गृहस्थस्य गृहं प्रविशतः किल॥ १४॥**

जगत को बनाकर परमात्मा ने उसीमें अनुप्रवेश किया। जिसमें प्रवेश किया वह अङ्ग हो ही जायेगा। द्वार में झुककर ही प्रवेश करते हैं। गृहस्थ घर में प्रवेशकर गृह को अङ्ग बनाता ही है।

**अग्निर्मूर्धा दिशः श्रोत्रे चक्षुषी चन्द्रभास्करौ।**
**इत्येवमङ्गविधया व्याख्यातमखिलं जगत्॥ १५॥**

अग्निमूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे इत्यादि मन्त्र में पूरे जगत को परमात्मा के अङ्ग के रूप में वर्णन किया है।

**न क्लोपयति न स्नेहयति भस्मयतीतरत्।**
**इत्यपि व्यग्रहीदत्र मुनिरग्निपदं स्वयम्॥ १६॥**

अग्नि वस्तु को गीली नहीं करती (किन्तु भस्म करती है) यह भी यास्क ने कहा है।

**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते किल।**
**कर्मदाहे जगद्दाहः ज्ञानरूपस्तथेश्वरः॥ १७॥**

ज्ञानाग्नि सर्वकर्म को जलाती है ऐसा गीता में कहा है। सर्वकर्मदाह हुआ तो कर्मजन्य जगत कैसे रहेगा। भगवान ज्ञानस्वरूप ही है।

इन्द्रं मित्रं च वरुणमग्निमाहुर्मनीषिणः।
तमेव चैकं सद्विप्रा वदन्ति बहुधा बुधाः॥१८॥

'इन्द्रं मित्रं वरुणं' इत्यादि श्रुति को लेकर यास्क ने कहा - 'इममेवाग्निं महान्तमात्मानम् एंकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणम्' अर्थात् इसी अग्निरूपी (अग्निशब्दार्थरूपी) महान आत्मा को एक आत्मा को (परमात्मा को) लेकर मेधावी लोग इन्द्रं मित्रं वरुणं इत्यादि कहते हैं।

सर्वदेवस्वरूपत्वादग्नेर्महत आत्मनः।
स्तोतव्या न पृथक् सन्ति मित्राद्याः सर्वदेवताः॥१९॥
मित्रेन्द्रवरुणादीनामात्माग्न्यात्मत्वतः स्वतः।
प्रार्थितेऽग्नौ प्रार्थिताः स्युः सर्वेऽपीत्यतिकौशलम्॥२०॥

परमात्मस्वरूप अग्नि सर्वदेवस्वरूप होने से मित्रवरुणादि की पृथक् स्तुति करने की जरूरत नहीं रही। परमात्मा अग्निस्वरूप होने से अग्नि स्तुति से सर्व स्तुति हो जाती है यह श्रुति की अति कुशलता है।

एवं - निरुक्तवचनचिन्तनेनेदमागतम् ।
ब्रह्मैवात्राग्निशब्देन सर्वात्मात्मा विवक्षितः॥२१॥

महर्षि यास्ककृत यथोक्त व्याख्यान से यही बात प्रकट होती है कि यहां अग्नि शब्द से सर्वात्मारूप ब्रह्म ही श्रुति-विवक्षित है।

नन्वृग्वेदसमारम्भश्रुत्यर्थो यास्कभाषितः।
दशमे मण्डले त्वेष विंशसूक्तस्थितो मनुः॥२२॥
मङ्गलाचरणत्वेन स्यादादौ ब्रह्मचिन्तनम्।
अयं तु कर्मकाण्डस्थ इत्यतोऽत्राग्निदेवता॥२३॥

पू. - ऋग्वेदारम्भ श्रुति अग्निमीळे पुरोहितं इत्यादि का अर्थ महर्षि यास्क ने किया। मङ्गलाचरण होने से वह ब्रह्म-चिन्तनार्थ होगा। दशम मण्डल में तो कर्मकाण्ड है ज्योतिष्मद्गुणक अग्नि देवताक इष्टि में यह शंसन होता है। अतः यहां अग्नि देवता ही अर्थ होना चाहिये।

तन्नाग्निमीड इति हि प्रत्यभिज्ञायते स्फुटम्।
युज्यन्तेऽन्यानि च पदा-न्यत्रैव ब्रह्मणीत्यपि॥ २४॥

उ. - यह बात नहीं है। अग्निमीळे इतना स्पष्ट प्रत्यभिज्ञान हो रहा है। भुजां यविष्ठं इत्यादि भी ब्रह्म में सुघट है।

किं च शान्त्यर्थमन्त्रोऽयं शान्तिः स्याद् ब्रह्मचिन्तनात्।
न हि स्यात् कर्मकाण्डेन शान्तिर्या मोक्षलक्षणा॥ २५॥

दूसरी बात यह शान्त्यर्थ मन्त्र है। शान्ति ब्रह्म-चिन्तन से होती है। कर्मकाण्ड से मोक्षरूपी शान्ति नहीं होती।

ननु प्रथममन्त्रोऽत्र शान्त्यर्थः शान्तिपाठगः।
द्वितीये त्वग्निरेवार्थः कर्माङ्गस्मरणार्थतः॥ २६॥

पूर्व - माना कि प्रथम मन्त्र शान्त्यर्थ है। पर द्वितीय कर्मार्थक है। अतः कर्माङ्ग अग्निस्मारक ही होगा।

मैवं कर्तुरनिर्देशाद् द्वितीयेनान्वयादिह।
ब्रह्मैवात्राग्निशब्दार्थो भवतीत्येव युज्यते॥ २७॥
यद्वैषा पञ्चपाद्यृक्स्यात्तेनाग्निर्ब्रह्म संभवेत्।
अनुक्रमणिकायां च तदेतत् प्रतिपादितम्॥ २८॥

उ. - ऐसी बात नहीं है। प्रथम मन्त्र में अपिवातनकर्ता का निर्देश न होने से द्वितीय मन्त्र से ही विभक्ति व्यत्यय से अग्निकर्ता को लाना पडेगा तब अग्नि का अर्थ द्वितीय मन्त्र में अग्नि ही संभव है। अथवा दोनों मिलाकर पंचपादी एक ही ऋचा है। यह सारी बातें अनुक्रम में स्पष्ट है।

तत्र भद्रं दशाग्नेयं गायत्रं प्रोच्य संजगौ।
आद्या त्वेकपदा तत्र शान्त्यर्थः पाद एव वा॥ २९॥

अनुक्रम ग्रन्थ में भद्रं दश आग्नेयं गायत्रं कहकर आगे कहा-प्रथमा ऋक् एकपदा है-भद्रं इतनी ही ऋचा है या पूरा पाद ही शान्त्यर्थ है।

ऋग्यद्येकपदा तर्हि स्युरेकादश ता इह।
पञ्चपादाभ्युपगमे त्वस्माकं तु नवैव ताः॥ ३०॥

भद्रस्य पृथगुक्त्वे च पादादौ नस् कथं भवेत्।
तस्मादृगन्तरत्वेऽपि वाक्यैक्यं तत्र संमतम्॥ ३१॥
तथा चर्गन्तरत्वेऽपि पूर्वेणान्वयिनी भवेत्।
अग्निमीळ इतीयं ह्यृक् ब्रह्मार्थो ह्यग्निरेव च॥ ३२॥

'भद्रं' यह एकपदा ऋक् है तब नो अपिवातय मनः यह भी एक ऋचा होगी, ऐसी अवस्था में एकादश आग्नेय होगा। हमारे दर्शित पञ्चपादी मानने पर नौ नौ ऋचायें होंगी। फलतः संख्या में अनास्था ही स्वीकार्य होगी। पर भद्रं को एक ऋचा मानने पर षष्ठी को 'नस्' आदेश कैसे होगा। 'अनुदात्तं सर्वमपादादौ' सूत्र है। पद से परे नस् होता है। वह भी नहीं है। तब यही कहना होगा ऋचा भिन्न होने पर भी एक वाक्य मान्य है। तब द्वितीय अग्निमीळे का पूर्वेणान्वय करने में क्या हानि। अग्नि का ब्रह्म अर्थ भी हो जायेगा।

किं चाद्यमन्त्रोऽप्याग्नेयः सांयाज्ये विनियुज्यते।
तस्मान्नानार्थता नूनं यास्कोक्तार्थेन जायते॥ ३३॥

दूसरी बात 'अग्निमीळे पुरोहितं' इस प्रथम मन्त्र का सांयाज्य में विनियोग बताया है। मन्त्र को भी आग्नेय बताया है। साह्वान विश्वा अभियुजोऽग्निमीळे पुरोहितमिति सांयाज्ये ऐसा आश्वलायन सूत्र है।

ततोऽनेकार्थता नैव दोषाय भवतीत्यतः।
ब्रह्मार्थत्वमिहाप्येव क्रियते काऽत्र यन्त्रणा॥ ३४॥

तब प्रथम मन्त्र कर्मार्थ होने से अग्नि का अर्थ अग्नि देवता भी है, यास्कदर्शित निरुक्ति के अनुसार ब्रह्म अर्थ भी है। ज्ञानार्थ होने से यहां पर भी ब्रह्म अर्थ लेना अनुचित नहीं है।

किं चेन्द्रं वरुणं मित्रमग्निमाहुर्मनीषिणः।
स सुपर्णो गुरुत्मांश्च दिव्यो वेदेषु कीर्त्तितः॥ ३५॥
तत्त्वमेकं हि सद्विप्रा वदन्ति बहुधा बुधाः।
तमेवाग्निं यमं मातरिश्वानं चाहुरीश्वरम्॥ ३६॥
इत्येवं श्रुतिषूक्तत्वाद् ब्रह्मैव परमार्थतः।
विविधोपाधिमादाय प्रोच्यतेऽन्यादिशब्दतः॥ ३७॥

ऐश्वर्योपहितो हीन्द्रो वरुणः पापवारणात्।
मरणत्राणतो मित्र इत्यादि विवृतं बुधैः॥ ३८॥

और विशेष बात यह है कि परमात्मा को ही इन्द्र वरुणादि नाम से उपाधि से वेदों में बताया है। इन्द्रं मित्रं वरुणमग्निमाहुः इत्यादि श्रुतियों (ऋग्वेद १-१६५-५६) में बताया है। ऐश्वर्योपाधि से इन्द्र नाम हुआ। पापवारण से वरुण नाम, मरणत्राण से मित्र इत्यादि विवरण सायणभाष्य में द्रष्टव्य है।

अमुं यज यजामुं चेत्येकैकं देवमाह यत्।
एतस्यैव विसृष्टिः सा सर्वे देवाः स एव हि॥ ३९॥

इसका याग करो फलाने का पूजन करो ऐसे एक-एक देव को लेकर जो बताते हैं, ये सब एक परमात्मा के ही नानोपाधिप्रयुक्त रूप हैं। सभी देव एक परमात्मा ही है।

हिरण्यगर्भ एवात्र बृहदारण्यके मतः।
स एव सर्वे देवाश्चेत् परो हि सुतरां भवेत्॥ ४०॥

यद्यपि बृहदारण्क में हिरण्यगर्भ (प्रजापति) के प्रसंग में यह कहा। तथापि हिरण्यगर्भरूप ही सब देव हों तो ब्रह्मरूप सुतरां सिद्ध होगा।

एष ब्रह्मा ह्येष इन्द्र एष एव प्रजापतिः।
एते सर्वे तथा देवा एष एवेति च श्रुतेः॥ ४१॥

ऐतरेय में एष ब्रह्मा इत्यादि बताया है।

तथा चोत्तरमन्त्रस्थो ह्यग्निर्ब्रह्मैव नानलः।
सो-ऽपिवातनकार्योऽत्र कर्तृत्वेनानुकृष्यते॥ ४२॥

इस प्रकार उत्तर मन्त्रस्थ अग्नि शब्द ब्रह्मबोधक होने में कोई बाधा नहीं है। पूर्व मन्त्र में अपिवातन कर्ता के रूप में उसीका अनुकर्ष होगा। साधारण अग्नि या परिच्छिन्न अग्निदेवता नहीं।

एतदुक्तं भवत्यस्मि-न्नपिवातनकर्मणि।
कर्ता न दृश्यतेऽयं किमध्याहार्यो हि कश्चन॥ ४३॥

किं वात्रोत्तरमन्त्रीय आक्रष्टव्योऽस्तु कश्चन।
उपस्थितेर्लाधवाच्च युक्तमत्रानुकर्षणम्॥४४॥
अन्यथा कर्तृबाहुल्यात् कः स्यादिति न निर्णयः।
नन्वग्निरुत्तरे नायं प्रथितः प्रेरकात्मना॥४५॥
सत्यं ब्रह्मैव तस्यार्थो मनसो मन इत्यतः।
न चात एव वचसा नाध्याहारेऽपि गौरवम्॥४६॥
गुरुर्वा कोऽपि सिद्धो वा कश्चिद्देवादिरेव वा।
श्रुतेस्तात्पर्यमत्रेति सहसा निश्चयाऽग्रहात्॥४७॥
न चाग्निशब्दार्थोऽप्येवं स्यात्तव प्रविकल्पितः।
वेदादावेव तस्यार्थो बहुधा चिन्तितो यतः॥४८॥
इन्द्रं च मित्रं वरुणमित्येवं च निरूपणात्।
तस्य च प्रत्यभिज्ञानादिति सर्वं समञ्जसम्॥४९॥

यहां का सारांश यह है कि-अपिवातय का कर्ता यहां बताया नहीं है तो किसी कर्ता का अध्याहार करें या उत्तर मन्त्रोक्त का अनुकर्षण करें यह संदेह होता है। उपस्थित होने से अनुकर्षण उचित है। अन्यथा दुनिया में कई कर्ता हैं, किस का अध्याहार करें? परंतु उत्तर मन्त्रस्थ आग (अग्नि) प्रेरक कहां है? बात सत्य है, किन्तु अग्नि का ब्रह्म अर्थ है। ब्रह्म मन का प्रेरक है यह मनसो मनः इत्यादि श्रुति से सिद्ध है। यदि ऐसा है तो उसी श्रुति के आधार पर ब्रह्म का अध्याहार कर लो। नहीं। प्रेरक गुह्म, सिद्ध, कोई देवता आदि भी संभव होने से प्रकृत श्रुति में किस में तात्पर्य है-यह निर्णय नहीं हो सकता। यही बात फिर अग्नि शब्द के अनुकर्षण में भी होगा। अग्नि का अर्थ आग है या ब्राह्मण है या अग्नि देवता है इत्यादि। नहीं। ऋग्वेद के आदिम मन्त्र में इस पर चिन्तन एवं निर्णय हो चुका है, अग्निं वरुणं मित्रं इत्यादि से श्रुति ने भी ब्रह्म अर्थ दिखाया है। उसी की यहां अग्निमीळे से प्रत्यभिज्ञा होती है। अतः सर्व समञ्जस है।

## भद्रं नः

भद्रं स्याद् भदि कल्याणे सुखे चेत्यनुशासनात्।
कल्याणं च सुखं चैव शिवाद्यर्थे च पुंस्ययम्॥५०॥

भदि कल्याणे सुखे च इस धातुपाठ से भद्र का कल्याण और सुख अर्थ है। पुंलिंग में शिव आदि भी अर्थ है।

कल्याणं च सुखं चात्मधर्मं प्रोवाच माधवः।
तत्कारणं कार्यमपि भद्रमेव निगद्यते॥५१॥
पश्येम भद्रं चक्षुर्भिः कर्णैश्च शृणुयाम तत्।
नैव ह्यात्मगुणः कर्णैश्चक्षुर्भिरपि गृह्यते॥५२॥
वेदादिश्रवणं भद्रं भद्रं विप्रादिदर्शनम्।
आयाति भद्रपुरुषो भद्रसम्बोधनं तथा॥५३॥
अर्शआद्यचि शब्दोऽयं त्रिलिङ्गं भण्यते यदि।
संभवत्यत्र चाप्येव ह्यन्तोदात्तोऽस्ति चित्स्वरः॥५४॥

कल्याण तथा सुख दोनों को माधवाचार्य ने आत्मधर्म धातुवृत्ति में बताया है। कल्याणकारी कर्मादि भी भद्र ही कहलाता है। भद्रं कर्णेभिः शृणुयाम, भद्रं पश्येमाक्षभिः ऐसा प्रयोग है। कान से और आंख से आत्मगुण का ग्रहण नहीं होता। वेदश्रवण भद्र है, विप्रदर्शन भद्र है इत्यादि प्रयोग भी होते हैं। यह भद्र पुरुष-ऐसा पुरुष भी भद्र होता है। भद्र इत्यादि सम्बोधन भी नाटकादि में है।। 'भद्रमस्यास्ति' इस अर्थ में अर्श आदि अच् मानें तो भी यहां वह संभव है। चितः से अन्तोदात्त है। यहां अन्तोदात्त ही पठित है।

यज्ञदानादिकं सर्वं कर्म भद्रात्मकं मतम्।
सत्यप्रियादिवचनं स्वाध्यायाभ्यसनादि च॥५५॥
आत्मनः श्रवणं चैव मननं ध्यानमेव च।
दर्शनं स्मरणं चैव भद्रमेवाभिधीयते॥५६॥
गुरूपसदनं चैव तदुपासनमेव च।
तदाज्ञापालनं चैव भद्रमेव निगद्यते॥५७॥

विवेकत्यागवैराग्यपारिव्राज्यात्मसंस्थताः।
विविक्तदेशसेवित्वयोगाभ्यासादिनिष्ठता॥ ५८॥
सत्सङ्गःसङ्गविरतिरमानित्वादिकं तथा।
सर्वमेतद् भवेद् भद्रं भद्रहेतुत्वतः सताम्॥ ५९॥

यज्ञदानादिबाह्यकर्म, सत्यवचनादि वाक्कर्म, दर्शन स्मरणादि मानस कर्म, सभी भद्र हैं। गुरूपसदन, गुरूपासन, गुर्वाज्ञापालनादि भी भद्र है। विवेक, वैराग्य, पारिव्राज्य, आत्मस्थिति, एकन्तसेवा, योगाभ्यास, सत्सङ्ग, असङ्गता एवं अमानित्वादि सभी भद्रहेतुत्वाद् भद्र है।

कुटुम्बभाणं भद्रं परिव्राज्यं कथं तथा।
शुकेन निन्दितत्वेन ह्यवैराग्यवतस्तथा॥ ६०॥
लोकदृष्ट्या तु भद्रं तत् स्वभावप्राप्तमेव च।
अपश्यतामात्मतत्वं गृहेषु गृहमेधिनाम्॥ ६१॥
निद्रया ह्रियते नक्तं व्यवायेन च वा वयः।
दिवा चार्थेहयां राजन् कुटुम्बभरणेन वा॥ ६२॥
देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ।
तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति॥ ६३॥
लोकयात्रादिहेतुत्वाल्लौकिकं भद्रमस्ति तत्।
पारमार्थिकभद्रं तु जन्ममृत्युविभञ्जनम्॥ ६४॥

कुटुम्बभरणादि भी तो भद्र है। तब पारिव्राज्य भद्र कैसे? सुनो। लोकदृष्ट्या भद्र है। पर शुकदेवजी ने उसे अप्रशस्त कहा। पुत्रोत्पादन कुटुम्बपालनादि परायण देखता हुआ भी अन्धा बना हुआ है। अपने निधनादि को नहीं देखता। लोकयात्रा हेतु होने से वे सब लौकिक भद्र भले हों, पारमार्थिक भद्र तो वही है जो जन्म-मरण-परम्परा को मिटा दे।

गृहेष्ववस्थितो राजन् क्रियाः सर्वा गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्॥ ६५॥
सत्सङ्गाच्छनकैः सङ्गमात्मजायागृहादिषु।
विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः॥ ६६॥

यावदर्थमुपासीनो देहे गेहे च पण्डितः।
विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत्॥६७॥
ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे।
यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः॥६८॥
त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि।
यथादेशं यथाकालं यावद्दैवोपपादितम्॥६९॥
इत्यादिभिर्बहुविध-मुपादिक्षत् शुको मुनिः।
तस्मान्नास्ति विरोधोऽत्र कोपि वा लोकशास्त्रयोः॥७०॥

गृह में रहकर गृहोचित कर्म कर वासुदेवार्पण करो, सन्तों का संग भी करो। ये सभी जिनको अपना समझते हो, तुम से अलग होंगे। अतः पहले ही अपना मन इनसे अलग कर लो। जितना प्रयोजन घर से है उतना सिद्ध करते हुए रागी के समान विरागी होकर मनुष्यता निर्वाह करो। घरवाले जो कहते हैं हां में हां भर लो। धर्म, अर्थ और कामरूपी त्रिवर्गों में ज्यादा मत फंसो। कालानुरूप शास्त्रादेश पालन ईश्वरेच्छा मानकर कार्य करो यह भद्र है। परम भद्र तो पूर्वोक्त है। अतः शास्त्र और लोक में कोई विरोध नहीं है। इत्यादि शुकदेवजी ने ही नारद मुख से (७.१४) बताया है।

## अपिवातय मनः

गतौ सुखे सेवने चाऽपठद् वातयतिं मुनिः।
यथायोग्यमिहार्थस्तु ग्राह्यो भवति काविदैः॥७१॥

वात गतिसुखसेवनेषु ऐसा धातुपाठ क्षीरस्वामी आदि ने माना है। प्रकृत में यथायोग्य अर्थ लेना चाहिये।

गतिबुद्धीतिसूत्रेण मनसः कर्मता भवेत्।
मनो गमय मे भद्रमित्यर्थस्तेन लभ्यते॥७२॥

'गतिबुद्धिप्रत्य०' इत्यादि पाणिनीय सूत्रानुसार द्विकर्मक होगा। मन को भद्र की ओर ले चलो यह अर्थ होगा।

नन्वण्यन्ते हि यः कर्ता ण्यन्ते याति स कर्मताम्।
न वातयतिरण्यन्तः कथं कर्मत्वमाप्नुयात्॥ ७३॥
अनित्यण्यन्ततां प्राहुर्न्यासकारादयो बुधाः।
चुरादेस्तन्न युक्तं तु महाभाष्यविरोधतः॥ ७४॥
यत्र स्याज्ज्ञापकं किंचित् तत्रैव णिविकल्पनम्।
न हि वातयतौ किंचिज्ज्ञापकं णिविकल्पने॥ ७५॥

यहां व्याकरणवाले पूर्वपक्ष उठाते हैं-अण्यन्त में कर्ता ण्यन्त में कर्म होगा। अण्यन्त वातधातु का प्रयोग ही नहीं है। यद्यपि न्यासकारादि ने आनित्यण्यन्ताश्चुरादयः बताया है। परंतु वह महाभाष्य विरुद्ध है। क्योंकि महाभाष्य में घुषिर् अविशब्दने यहां अर्थविशेष में-विशब्दन अर्थ में णिच् विकल्प है अन्यत्र नहीं ऐसा ज्ञापन होता है। ऐसा भाष्य में कहा है। जहां कोई ज्ञापक हो वहां णिविकल्प है। वात धातु में कोई ज्ञापक नहीं। अतः नित्यणिच् है।

मैवं सूत्रे णिसामान्या-ऽभावो नाणावितीर्यते।
यण्ण्यभावे भवेत् कर्ता तण्णौ कर्मेति भण्यते॥ ७६॥

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ ऐसा सूत्र है। यहां अणौ का णिसामान्याभाव अर्थ नहीं है। किन्तु गत्याद्यर्थक धातु के जिस णि के अभाव में जो कर्ता होगा उस णि के आने पर वह कर्म होगा ऐसा विशेष अर्थ है।

णिजन्ताण्णिः प्रयुक्तोऽत्रे-त्यभावे हि द्वितीयणेः।
यत् कर्तृ मन इत्येतत् तण्णौ कर्म भवेददः॥ ७७॥

अपिवातय में णिजन्त से णिच है। द्वितीय णि के अभाव में वातन (भद्रः गमन) का कर्ता मन है। वह द्वितीय णि प्रयोग में कर्म हो जायेगा। 'णेरनिटि' सूत्र से प्रथम णि का लोप है।

अपिः समुच्चये काम-चारानुज्ञादिकेऽपि च।
सुखं गमयसि त्वं हि पुण्यकर्मसमाप्तये॥ ७८॥
दुःखं गमयसि त्वं हि पापकर्मापनुत्तये।
भद्रं च गमय त्वं नो मनो ज्ञानोद्भवाय हि॥ ७९॥

एवं समुच्चयार्थत्वमपेरत्र भविष्यति।
सर्वं कार्यं विरचयन् मनो भद्रं च वातय॥८०॥
यत् स्यात्परमकल्याणकारणं परमेश्वर।
अयोग्यमिति मां मत्वा मोपैक्षिष्ठाः कृपानिधे॥८१॥

अपि का समुच्चय एवं कामचारानुज्ञादि भी अर्थ है। हे परमात्मन्! आप सुख प्राप्त कराते हैं पुण्यकर्म समाप्ति के लिये। दुःख प्राप्त कराते हैं पापकर्म खलास करने के लिये। इस प्रकार आप की प्रवृत्ति नैष्कर्म्य प्राप्त कराने की है किन्तु भद्रं भी प्राप्त करायें। ज्ञानोद्भावनार्थ ऐसा यहां समुच्चय अर्थ है। समस्त कार्यों को बनानेवाले मेरे मन को भद्र भी प्राप्त कराओ जो परम कल्याणकारण है, अयोग्य समझकर मेरी उपेक्षा न करो ऐसा भी समुच्चय है।

नरकं गमय त्वं मां स्वर्गं वा गमय स्वयम्।
अपि भद्रं गमय मे मनः स्वच्छन्दकार्यसि॥८२॥

मुझे नरक में डालो या स्वर्ग में ले जाओ, मन को भद्र में ले जाओ आप की इच्छा।

अपरे पुनराचार्या क्रियादार्ढ्यार्थहेतवे।
धात्वर्थस्यानुवाद्येष उपसर्गोऽपिर्हि योजितः॥८३॥

अन्य आचार्यों का कहना है कि धात्वर्थ गमन=प्रापण में दृढता लाने के लिये द्विरुक्तिसदृश धात्वर्थानुवादि अपि उपसर्ग है।

भद्रकार्ये हि भगवन्नग्ने प्रेरय मे मनः।
यज्ञदानतपःकर्म पावनं भद्रमेव तत्॥८४॥

उक्त अर्थ का विस्तार इस प्रकार होगा कि हे परमेश्वर अग्ने! मेरे मन को भद्र कार्य में लगाओ। यज्ञदानतप आदि कर्म पावन है, भद्र है। उसमें मेरे मन को प्रेरित करो।

ननु बन्धनबीजानि कर्माणि मुनयो विदुः।
कथं नैष्कर्म्यकामोऽत्र ब्रूयात् गमयितुं मनः॥८५॥
हन्तोपनिषदोऽध्येतुं पठ्यन्ते शान्तयः किल।
संन्यस्य श्रवणं कुर्यात्तस्य कर्माणि भो कथम्॥८६॥

पू. - कर्म बन्धनकारी है।मोक्ष नैष्कर्म्य है। मुमुक्षु क्यों कर्म चाहेगा? शान्तिपाठ उपनिषदों के अध्ययनार्थ है। कर्म संन्यास का तदर्थ विधान है।

मैवं कामयमानानां कर्म बन्धनकारणम्।
तच्चाकामयमानानां चित्तशुद्ध्यादिकारणम्॥८७॥

उ. - नहीं; कामनावालों के लिये कर्म बन्धकारण है। अकाम की चित्तशुद्धिकारक है।

ननु कामं विना नैव किं चित्कर्मोपपद्यते।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्॥८८॥

पू. - कामना न हो तो कोई भी कर्म नहीं बनेगा। यद्यद्धि इत्यादि भारतवचन है।

मैवं कामविशेषो हि भवेद् बन्धनकारणम्।
अन्यथा मोक्षकामोऽपि कामत्वाद् बन्धनं भवेत्॥८९॥

उ. - खास कामना ही बन्धनहेतु है। अन्यथा मोक्षकामना भी वन्धनहेतु होने लगेगी।

निषक्तं यत्फले लिङ्ग-मियात् तत् कर्मणा फलम्।
प्राप्यान्तं कर्मणस्तस्य ह्यत्रैव पुनरेत्ययम्॥९०॥
इत्येतेनोदितं काम-मुपसंहरति श्रुतिः।
इति कामयमानो न्वित्येवं बन्धनकारणम्॥९१॥

काम कथनोत्तर श्लोकरूप श्रुति में कहा-जिस फल में कामना रखकर कर्म किया और यहां से महाप्रयाण किया वह लिङ्गशरीरी उस कर्म के साथ परलोक फल भोगकर कर्मावसान में यहीं वापिस आता है। इसी कामना का अनुवाद आगे किया-इति नु कामयमानः। न कि भोजनादिकी कामना भी। अतः चित्तशुद्ध्यर्थ किया कर्म वन्धन नहीं है।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।
ब्रह्मग्रहणयोग्या हि ब्राह्मीत्याख्यायते बुधैः॥९२॥

महायज्ञ एवं यज्ञों से इस तन को ब्रह्मग्रहणयोग्य बनाते हैं ऐसी भी स्मृति है।

शक्यमाश्रमकर्माणि कर्तुं शास्त्रोदितत्वतः।
द्रव्ययज्ञास्तपोयज्ञा इत्याद्युक्ता भवन्ति ते॥ ९३॥

आश्रमकर्म शास्त्रोदित होने से किये जा सकते हैं। यज्ञ शब्द से आग्रह है तो द्रव्य यज्ञास्तपोयज्ञा इत्यादि करें।

निर्विकल्पो महायज्ञः योगो भवितुमर्हति।
तैरेव च यतीनां स्यान्महायज्ञादयः सताम्॥ ९४॥

निर्विकल्पक समाधि महायज्ञ हो जायेगा संन्यासियों के लिये।

स्वर्णादिस्पर्शविरहात् कथं दानं भवेद्यतेः।
न स्प्रष्टव्यं रसेनेति विशेषणविलोकनात्॥ ९५॥
अनायासं यदायाति सुवर्णादि धनं यतिः।
शक्नोति कर्तुं तद्दानं रसाभावः स्वयं भवेत्॥ ९६॥
भिक्षाद्याप्तस्य चान्नस्य शक्यं दानं बुभुक्षवे।
न हि निष्करुणः क्रूरः स ह्यन्यक्लेशकातरः॥ ९७॥
शास्त्रेषु यत्तु कथितं कठिनं यमिनां व्रतम्।
मा भून्मोहं क्वचिदिति दृष्टार्थं न तु पापतः॥ ९८॥
यदि मोहः प्रजायेत पतितस्तु यतिर्भवेत्।
दोषः स हि भवत्येव मोहाभावे न किंचन॥ ९९॥
तपः कृच्छ्रादिकं नैव पापायेति विनिश्चयः।
तत्राप्यभिनिवेशस्तु शनैस्त्याज्यो यतीश्वरैः॥ १००॥
आलस्यादेः समुद्धृत्य यज्ञादावपिवातय।
भद्रे येन मनःशुद्ध्यै ससम्यर्थेऽस्तु वाऽत्र सुः॥ १०१॥

संन्यासी को स्वर्णादि स्पर्श निषेध है। दान कैसे करेगा? श्रुति में 'रसेन' विशेषण है। रस अत्यन्त राग को कहते हैं। अतिराग से स्वर्णादि स्पर्श भी नहीं करना चाहिये जो अनायास धनादि आता है उसका दान आराम से कर सकते हैं। बल्कि आये हुए का दान करो रस ही छूट जायेगा। प्राप्त भिक्षान्न को दूसरों को दे सकते हैं। जो स्वादिष्ट अन्नादि ग्रहण न करो इत्यादि दृष्ट फल मोहाभाव के लिये है। न कि पाप भय

से। तप भी यज्ञ है। आलस्यादि छोडकर ऐसे भद्र यज्ञादि में मन को प्रेरित करो।

शिवविष्णवाद्युपास्तौ चाप्यपिवातय मे मनः।
चित्तस्थैर्याय तस्यैव प्रसादाय च हे प्रभो॥१०२॥
स्थिरं प्रसन्नमपि च चित्तं स्वं जायते यदा।
तदौपनिषदार्थस्य सुसाधुग्रहणं भवेत्॥१०३॥

शिव विष्णु आदि की उपासना भी भद्र है। उसमें भी मेरा मन लगा दो। जिससे चित्तस्थैर्य एवं उपास्य देव की प्रसन्नता होगी। उससे उपनिषत् प्रोक्त अर्थ का ग्रहण करना भी आसान हो जायेगा।

मधुसूदननामा हि प्रसिद्धः सुमहान् यतिः।
कृष्णमाराधयामास कृष्णमन्त्रं जजाप च॥१०४॥
प्रत्यक्षदर्शनं कृष्णो ददाविति जनश्रुतिः।
ततश्च परमं ज्ञानं तस्याभूदिति पण्डिताः॥१०५॥

श्री मधुसूदन सरस्वती ने श्री कृष्ण की उपासना और मन्त्रजाप किया। उन्हें श्री कृष्ण का प्रत्यक्ष दर्शन हुआ ऐसी जनश्रुति है उसीसे वे महान ज्ञानी हुए ऐसे पण्डित लोग कहते है।

श्रीविद्योपासको रात्रौ चन्द्रवद् भानुवद्दिवा।
जीवन्मुक्तो विचरती-त्याह गौडमहागुरुः॥१०६॥

श्रीविद्योपासक जीवन्मुक्त होकर रातको चन्द्रमा के समान और दिन में सूर्य के समान विचरण करता है ऐसे परम गुरु गौडपादाचार्य सुभगोदय में कहते हैं।

भक्तिश्च परमं भद्रम् ईश्वरे च गुरावपि।
सा प्रेमलक्षणा प्रोक्ता नारदाद्यैः महर्षिभिः॥१०७॥
परानुरक्तिं तामाह शाण्डिल्यो हि महामुनिः।
मनस्तां चापि गमय भगवन्नपिवातय॥१०८॥

ईश्वर और गुरु में भक्ति भी परम भद्र है वह प्रेमस्वरूप अनुरक्ति स्वरूप है ऐसा ऋषि मत है। मन उसे भी प्राप्त करे।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥१०९॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥११०॥
इति श्रुतौ स्मृतौ चैवाऽवर्णि तन्महिमा स्फुटम्।
ततश्च भद्ररूपत्वान्मनस्तां गमय प्रभो॥१११॥

भगवान में और गुरु में परम भक्ति हो तो ब्रह्मप्रबोध होता है यही श्रुति और स्मृति में कहा है।

साध्या भक्तिरियं प्रोक्ता परमप्रेमलक्षणा।
नवधा भक्तिरन्या च प्रोक्ता साधनरूपिणी॥११२॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥११३॥
एषा च नवधा भक्तिः सा च भद्रस्वरूपिणी।
तां वापिवातय विभो मां त्वत्तत्त्वस्य दृष्टये॥११४॥

प्रेमलक्षणा साध्य भक्ति है श्रवणकीर्त्तनादि साधन भक्ति है। दो भद्र हैं, मुझे प्राप्त कराओ।

गुरुभक्तिर्भवेच्छ्रद्धा पूर्णविश्वासरूपिणी।
उत्कर्षबुद्धिसहितं प्रेम श्रद्धाभिधीयते॥११५॥
गुरुर्ब्रह्मा गुरुर्विष्णु - र्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परं ब्रह्मेत्येवंरूपा तु सा भवेत्॥११६॥

गुरुभक्ति गुरु में श्रद्धा है। श्रद्धा उत्कर्ष दर्शन के साथ प्रेमभाव को कहते हैं। गुरु ब्रंह्मा गुरुर्विष्णु इत्यादि भाव ही वह है।

तस्यानुगमनं नित्यं तदाज्ञापरिपालनम्।
अभ्युत्थानप्रणमनप्रभृति स्मृतिदर्शितम्॥११७॥
यद्यदाचरति श्रेष्ठ इतिवच्चानुवर्तनम्।
शिष्ययोग्यं तु यत् सा स्याद्भक्तिः साधनरूपिणी॥११८॥

गुरु का अनुगमन आज्ञापालन यद्यदाचरति श्रेष्ठ के अनुसार गुरु के

उन आचरणों का जो शिष्ययोग्य है, अनुवर्तन अन्य भी स्मृत्युक्त कार्य साधन भक्ति है।

असंकल्पाज्जयेत् कामं क्रोधं कामविवर्जनात्।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात्॥ ११९॥
आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया।
योगान्तरायान् मौनेन हिंसां कायाद्यनीहया॥ १२०॥
कृपया भूतजं दुःखं दैवं जह्यात्समाधिना।
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया॥ १२१॥
रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च।
एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्॥ १२२॥
कामादिविजयो भद्रं ज्ञानहेतुत्वतो मतः।
तस्य हेतुरसंकल्पप्रभृतिः शास्त्रदर्शितः॥ १२३॥
एकया गुरुभक्त्यैवं सर्वं सम्पद्यते ततः।
गुरुभक्तिर्हि परमं भद्रं तेभ्यः सतां मतम्॥ १२४॥

असंकल्प से काम को जीतो, कामत्याग से क्रोध को जीतो, अर्थ को अनर्थकारी समझकर लोभ को जीतो, तत्त्वविचार से भय को जीतो आन्वीक्षिकी से शोक मोह को जीतो, महत् सेवा से दम्भ को जीतो, मौन से योग विघ्नों को जीतो, हिंसा को चेष्टात्याग से दूर करो, आधिभौतिक दुःख को कृपा से, आधिदैविक को समाधि से, आध्यात्मिक को योगवीर्य से जीतो, निद्रा को सत्त्वगुण से जीतो, रज और तम को सत्त्वगुण से जीतो, सत्त्व को शान्ति से जीतो इन सबको गुरुभक्ति से बडे आराम से जीतो। कामादि विजय ज्ञानकारण होने से भद्र है, सर्वकारण होने से गुरुभक्ति परम भद्र है। यही भागवत में बताया है।

व्याख्येयानि बहून्यत्र सन्ति भद्राणि तत्र च।
संक्षेपाद्दर्शितं किंचित् तन्महेशापिवातय॥ १२५॥

व्याख्येय अनन्त भद्र है। किंचित् यहां दिखाया। हे महेश उस भद्र को मुझे प्राप्त करायिये।

भद्रः शिवे खञ्जरीटे इति कोशेषु दर्शनात्।
पुंलिङ्गे भद्रशब्दस्तु शंकरेऽपि प्रवर्तते॥ १२६॥
शंकरं प्राप्य चाग्रे मे मनोभक्तिसमन्वितम्।
इत्येवं च विवृण्वन्ति शिवभक्तिपरायणाः॥ १२७॥

कोशानुसार पुंलिंग भद्र शब्द शंकरार्थक भी है। हे अग्नि! भक्ति-समन्वित मेरे मन को शिवजी में लगाओ ऐसी शिवभक्तों की व्याख्या है।

ॐ शान्तिः शान्तिः शान्तिः

शरीरमाद्यं भवति परमं धर्मसाधनम्।
नैव सर्वशरीरं तु मानवं किन्तु तादृशम्॥ १२८॥

प्रथम धर्मसाधन शरीर है। सर्वशरीर नहीं, किन्तु मानवशरीर।

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः।
क्षणवच्छतवर्षोऽपि कालोऽयमपगच्छति॥ १२९॥
यथा क्षणे न हि महत् कार्यं सम्पाद्यते तथा।
शतवर्षेऽपि नेतीति देहोऽयं क्षणभङ्गुरः॥ १३०॥
रोगादयस्तत्र सन्ति उपसर्गाः शरीरगाः।
स्वस्थेऽपि दुश्चयो धर्मो रुग्णे तत्र तु का कथा॥ १३१॥
भद्रप्रापणहेतौ मे उपसर्गास्तथाविधाः।
शमं यान्त्वस्तुशान्तिर्मे भद्रप्रापणकारण॥ १३२॥

शरीर क्षणभंगुर क्षण के समान परम धर्म किये बिना ही शतवर्ष बिताते है। स्वस्थ शरीर में भी धर्म संपादन नहीं हो पाता तो रुग्ण शरीर में क्या कहना? अतः भद्रप्रापक है प्रभो देहोपसर्ग शमन हो।

किं च मानसचाञ्चल्यमर्जुनोऽप्याह केशवम्।
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्॥ १३३॥
कामादिकं चाह दोषं पापाचरणकारणम्।
आध्यात्मिकः सोऽपि शमं यातु शान्तिस्तथास्तु मे॥ १३४॥
सन्ति भूतानि भूयांसि विघ्नकारीणि चाभितः।
दुष्टाश्च जन्तवो दुष्टा नराश्चैव सहस्रशः॥ १३५॥

किं तत्र बहुना मित्र-बान्धवाद्याश्च भूरिशः।
वैराग्यमार्गे विघ्नन्ति रोदयन्ति रुदन्ति च॥१३६॥
तीर्थे नीत्वा हि मां विघ्नशमनं भौतिकं कुरु।
शान्तिर्भवतु मे शान्त्या भद्रं च प्राप्नुयामहम्॥१३७॥
बन्धुवर्गवदेवैते देवा विघ्नन्ति भोगदाः।
न हि भोगविषक्तो हि वैराग्यं लभते नरः॥१३८॥
आपूर्णमचलस्थैर्यं विशन्त्यापोऽम्बुधिं यथा।
तथा विशन्ति कामा यं तस्य शान्तिर्न कामिनः॥१३९॥
माभूद्भोगरतिर्मेऽग्रे वैराग्यपरिपन्थिनी।
ज्ञानवैराग्यतृप्तस्य शान्तिरस्तु भृशं मम॥१४०॥

मन की चंचलता गीता में अर्जुन ने भगवान को कहा। पापाचरण कारण काम को भगवान ने कहा। कामादि की शान्ति हो मानस शान्ति हो।

दुष्ट जन्तु, दुष्ट नर आदि तो भूत जैसे विघ्न डालते ही है। मित्र बन्धु आदि भी वैराग्य मार्ग में विघ्न डालते हैं। पुत्रादि को विरक्त देखकर मांबाप भी रोते हैं रुलाते हैं, हे भगवान, तुम मुझे गृहनिरय से निकालकर तीर्थ गंगादि एवं तीर्थ गुरु के पास पहुंचाओ जिससे मुझे शान्ति हो, भद्र प्राप्त करूं।

बन्धुवर्गादि के समान देवता भी भोग देकर मनुष्य को भोगलिप्त बनाते हैं, वैराग्य से दूर पटकते हैं। भोगासक्त को वैराग्य कैसे हो। बताया है-समुद्रसमान। पूर्ण अचल प्रतिष्ठ समुद्र में जैसे नदियां प्रवेश करती हैं वैसे विरक्त पूर्ण पुरुष में विषय प्रवेश करे पर वह पूर्ण ही विरक्त ही रहता है उसीको शान्ति प्राप्त होती है कामकामी को नहीं। मुझे ज्ञान वैराग्य तृप्त करो। शान्ति सदा हो।

अल्पशब्दापि बह्वर्था ऋगेषा शन्तिकारिणी।
तन्यान्मुदं क्रियाच्छन्तिं सव्याख्यावार्त्तिका सताम्॥१४१॥
इति श्रीकाशिकानन्दगिरिणा कृतिना कृतम्।
अष्टमं गत ऋग्वेद शान्तिव्याख्यानवार्तिकम्॥१४२॥



ॐ

**ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभि — र्व्यशेम देवहितं यदायुः॥**
**स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु॥**
**ॐ शान्तिः शान्तिः शान्तिः॥**

देवाः=दिव्यगुणसम्पन्न भगवदंश हे देवो! कर्णेभिः=कानों से भद्रं=मङ्गलात्मक शब्द एवं अर्थ शृणुयाम=हम सुनें यजत्राः=यजनीय पूजनीय हे देवताओं! अक्षभिः=चक्षु आदि अन्य इन्द्रियों से भी भद्रं=मङ्गलात्मक अर्थ का पश्येम=हम साक्षात्कार करें। तदर्थ स्थिरैः=चाञ्चल्यरहित दृढ अङ्गैः=अवयवों से युक्त हम तुष्टुवांसः=आप देवताओं की स्तुति करते हुए तनूभिः=अपने शरीरों से आयुः=जीवन व्यशेम=पूर्ण करे यत्=जो (आयुः) देवहितं=देवताओं के लिये हितरूप हो। (देवहितं=देवस्थापितं व्यशेम=व्याप्नुयाम उपभुञ्जीमहित)

वृद्धश्रवाः=प्रवृद्ध कीर्त्ति इन्द्र=इन्द्र देवता नः=हमारे लिये स्वस्ति=कल्याणकारी हो। विश्ववेदाः=सर्वज्ञ विश्वधन पूषा=सूर्य देवता नः हमारे लिये स्वस्ति=स्वस्तिः=शोभन जीवनास्तित्वकारी हो। अरिष्टनेमिः=अशुभनाशक या शुभप्रापक तार्क्ष्यः=गरुड देवता नः=हमारे लिये स्वस्ति=मङ्गलदायी हो। बृहस्पतिः=देवगुरु नः=हमारे लिये स्वस्ति शुभ दधातु=स्थापित करे। त्रिविध शान्ति हो।

**नमः परमकल्याण - रूपाय परमात्मने।**
**सर्वदेवात्मने तस्मै सर्वस्वस्ति - विधायिने॥ १॥**
**व्याख्याने स्वकृते प्राग् या उक्तानुक्तदुरुक्तयः।**
**चिन्तां तत्रैव कुर्वाणो यते विद्याविशुद्धये॥ २॥**

परम कल्याण स्वरूप परमात्मा को प्रणाम करता हूं जो सर्वदेव स्वरूप है एवं सर्वकल्याणकारी है। पूर्व स्वयंकृत व्याख्यान में जो उक्त अनुक्त

दुरुक्त अर्थ रह गये उन्हीमें चिन्तन करते हुए तत्त्वशुद्धयर्थ यत्न करता हूं।

**भद्रं कर्णेभिरित्यादि स्वीयाशीः स्वस्य पावनी।**
**पूतः पावनविद्यायां यतोऽधिकुरुते सुधीः॥३॥**

भद्रं कर्णेभिः इत्यादि आशीर्वचन या आशावचन अपने को ही पवित्र करनेवाली है। स्वयं पवित्र होने पर पवित्र विद्या में सुधीजन अधिकारी होता है।

**विद्या ब्रह्मणमेत्याह शेवधिष्टोऽस्मि रक्ष माम्।**
**असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा॥४॥**
**श्रद्धावाननसूयश्च शृणुयादपि यो नरः।**
**सोऽपि मुक्तः शुभांल्लोकान् प्राप्नुयात्पुण्यकर्मणाम्॥५॥**
**श्रद्धधानाय भक्ताय विनीतायानसूयवे।**
**भूतेषु कृतमैत्राय शुश्रूषाभिरताय च॥६॥**
**बहिर्जातविरागाय शान्तचित्ताय दीयताम्।**
**निर्मत्सराय शुचये यस्याहं प्रेयसांपियम्॥७॥**
**इत्यादिवाचः पूतस्य प्राहुर्विद्याधिकारिताम्।**
**तस्मै दद्याद् गुरुर्विद्यां तादृशः प्राप्नुयादपि॥८॥**

विद्यादेवी पवित्र ब्रह्मनिष्ठ के पास आकर बोली-मैं तुम्हारी निधि हूं मेरी रक्षा करो और असूया करनेवालों को मुझे न दो। तब मैं वीर्यवत्तर होऊंगी। श्रद्धालु असूयारहित श्रवणमात्र भी करे तो भी मुक्त होकर शुभलोक को प्राप्त होगा। श्रद्धालु भक्त, असूयारहित, भूतसुहृत्, शुश्रूषु, बाह्य वस्तुओं से विरक्त शान्तचित्त, मात्सर्यरहित, पवित्र व्यक्ति को यह विद्या दे इत्यादि शास्त्रवचन पवित्र व्यक्ति को ब्रह्मविद्या का अधिकारी बताते हैं। ऐसे व्यक्ति को विद्या दो वैसा ही व्यक्ति प्राप्त भी करें।

**सिंहीक्षीरं यथा स्वर्णाऽमत्रेष्वेवावतिष्ठते।**
**तथैव ब्रह्मविद्यापि योग्यपात्रे समृध्यति॥९॥**

शेरनी का दूध स्वर्णपात्र में ही ठहरता है। ब्रह्मविद्या योग्य पात्र में ही समृद्ध होती है।

**असतां सदपि ज्ञान-मनर्थायैव कल्पते।**
**पयः पाने भुजङ्गानां केवलं विषवर्धनम्॥१०॥**

नीचों में ज्ञान अनर्थ हेतु ही होता है। सर्प को दूध पिलाओ तो जहर ही बढेगा।

**आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः।**
**इतिश्रुतेश्च भद्रत्व - माहारादेरपेक्षितम्॥११॥**

आहार शुद्ध हो, भद्र हो तो ही सत्त्व शुद्धि और उससे ध्रुवस्मृति होगी ऐसी श्रुति है।

**इन्द्रियादिष्वशुद्धेषु विद्या जातापि धीमताम्।**
**न सम्यगवभासाय कल्पते यतिनामपि॥१२॥**

भले बुद्धिमान हो, संन्यासी भी हो और श्रवरण से ब्रह्मविषयक ज्ञान उत्पन्न हुआ भी हो फिर भी इन्द्रियादि अशुद्ध हो अभद्र शब्द स्पर्शादि विषयाहरण करती हो तो भी वह विद्या ब्रह्म प्रकाशन नहीं कर पायेगी।

**विशुद्धिकारणं तस्मात् साधनं प्रतिपाद्यते।**
**आहारशुद्धावित्यादि हीति भाष्येऽपि दर्शितम्॥१३॥**

इसीलिये विशुद्धिकारण आहारशुद्धि आदि है ऐसा भाष्य में भी दिखाया है।

**तत्र चाहारशब्देन नान्नसूपादि केवलम्।**
**सर्वेऽप्याह्रियमाणास्तु शब्दस्पर्शादयो मताः॥१४॥**

श्रुति में आहार से दालभात मात्र नहीं आह्रियमाण शब्द स्पर्शादि सभी गृहीत है।

**तत्रापि ज्ञानमपि च विषयेण विवक्षितम्।**
**विषया हि सविज्ञानाः शुद्धास्तेन विवक्षिताः॥१५॥**

उसमें भी विषय से विषयज्ञान भी विवक्षित है। (विषयज्ञान रागद्वेषादि रहित हो।)

**शब्दादीनां विशुद्धानां ग्रहणं तेन भण्यते।**
**रागद्वेषादिरहितं तेषां विज्ञानमेव च॥१६॥**

शब्दादि स्वयं शुद्ध हो-सात्त्विक हो और श्रवणादिरूप आहार रागद्वेषाद्यसंस्पृष्ट हो।

वेदशास्त्रपुराणादि-श्रवणं सात्त्विकं भवेत्।
आहारः स फलाहार-समः पावन उच्यते॥ १७॥

वेदशास्त्र पुराणादि श्रवण सात्त्विक है, फलाहार समान पावन है।

लोकवार्तादि विषय-श्रवणं राजसं भवेत्।
अन्नाहारः स भवति व्यवहारप्रयोजकः॥ १८॥

लोकवार्ता आदि राजस है, वह अन्नाहार है, व्यवहार प्रयोजक है।

मिथ्यार्थविषयं निन्दाद्यात्मकं तामसं भवेत्।
मांसाहारः स भवति तामसोऽशुद्ध एव च॥ १९॥

मिथ्यावचन निन्दावचनादि मांसाहार है, तामस एवं अशुद्ध है।

गुर्वङ्घ्रेर्मित्रवर्गस्य धर्मभ्रष्टस्य या तथा।
स्पृष्टिर्दृष्टिः सात्त्विकी च राजसी तामसी तथा॥ २०॥

गुरुपादों का, मित्रों का और धर्मभ्रष्टों का स्पर्श क्रमशः सात्त्विक राजस, तामस है।

गणानां गणकानां च गणिकानां च रूपणम्।
यज्ञान्नस्य नृपान्नस्य चौरान्नस्य रसादनम्॥ २१॥
तथा तुलस्याः केतक्या आसवादेश्च गन्धनम्।
सात्त्विको राजसश्चैवमाहारस्तामसः क्रमात्॥ २२॥

गण=गणनीय देवादि, गणक ज्योतिषी आदि। केतकी उग्र गन्धवाली होने से राजस है। रूप, रस, गन्ध के क्रमिक सात्त्विक तामस उदाहरण है। इन सबका आहार भी वैसा है।

अतश्च कार्यकरणसंघातपरिशुद्धये।
भद्रं कर्णेभिरित्येवमाशास्ते मङ्गलात्मना॥ २३॥

सात्त्विक आहार ही शुद्ध है। अतः कार्य (देह) एवं करणों की शुद्धि के लिये भद्रं कर्णेभिः इत्यादि से सात्त्विक आहारों की आशा मङ्गलरूप से श्रुति कहती है।

**कर्णाभ्यामिति वक्तव्ये बहुत्वोक्तिः कथं ननु।**
**शृणुयामेति कर्तॄणां बहुत्वं त्वप्रयोजकम्॥ २४॥**
**तत्प्रतिव्यक्ति विश्रान्त-मन्यथाऽऽयूंषिकिं नहि।**
**न चैव बहुभिःकर्णैः शृणोति खलु कश्चन॥ २५॥**

पू. - कर्णाभ्यां कहना चाहिये था। कर्णैः बहुवचन कैसे। शृणुयाम कर्तृ बहुत्व तो अप्रयोजक है। क्योंकि वह प्रतिव्यक्ति विश्रान्त है। अन्यथा आगे आयुः यह एकवचन न कहकर आयूंषि कहते।

**स्यादस्मदो द्वयोश्चेति बहूक्तिर्नेतरस्य तु।**
**अन्यथा वक्तुरेकत्वे घटतां प्रार्थना कथम्॥ २६॥**

'अस्मदोद्वयोश्च' सूत्र से एकत्वादि विवक्षा में भी अस्मत् शब्द से बहुवचन होता है। अन्य शब्दों से नहीं। वक्तृबहुत्व ही विवक्षित हो तो एक व्यक्ति यह प्रार्थना नहीं कर पायेगा।

**मैवं वृत्तिबहुत्वेन कर्णैभिरिति युज्यते।**
**भवन्तु भद्रविषयाः सर्वा मे कर्णवृत्तयः॥ २७॥**

उ. - सुनो। कर्णवृत्ति बहुत्व से बहुवचन है। मेरी सभी कर्णवृत्तियां भद्र विषय हों।

**यद्वा वव्रे पृथुःश्रोतुं वरं कर्णायुतं हरेः।**
**महत्तमान्तर्हृदयात् श्रुतमास्याद्धरेः कथाम्॥ २८॥**
**भावावेशवशादेव तत्र कर्णायुतार्थना।**
**तद्वदत्रापि कर्णानां भावावेशवशाद्वचः॥ २९॥**

अथवा भावावेश में भी प्रार्थना होती जैसे पृथु राजा ने कहा-

**'न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः।**
**महत्तमान्तर्हृदयान्मुखच्युताद्विधत्स्व कर्णायुतमेव मे वरः'।**

सत्संग सुनने के लिये मेरे दस हजार कान हो यही मुझे वरदान दो।

**सहस्राक्षः श्रुतः शक्रो न कश्चिदयुतश्रवाः।**
**स वरः कुत्र संलग्नो भावावेशो हि तत्र सः॥ ३०॥**

सहस्राक्ष इन्द्र प्रसिद्ध है। किन्तु अयुतश्रोत्र किसी पुराण में वर्णित

नहीं है। तब वह वरदान विफल हुआ क्या? नहीं। वह भावावेश मात्र है।

ननु श्रुतेर्मनुजवद् भावावेशो न विद्यते।
इदं तावच्छ्रुतिवचो भावावेशः कथंतराम्॥ ३१॥
मैवं नृ - प्रातिनिध्येन ब्रवीति सकलं श्रुतिः।
अन्यथा कौ श्रुतेः कर्णौ किं भद्रं प्रार्थ्यते निजम्॥ ३२॥

पू. - श्रुति में मनुष्य के समान भावावेश नहीं होता है तो इस श्रुतिवचन में भावावेश कैसे? उ. - सुनो मनुष्य के प्रतिनिधि के रूप में श्रुति बोल रही है। नहीं तो श्रुति के कान कौन से है? कौनसा भद्र श्रुति अपने लिये मांग रही है।

भावावेशो भवेद् भक्त्या प्रार्थ्या देवास्तु भक्तितः।
इत्येतच्छ्रुतितात्पर्यं तेन सर्वं समञ्जसम्॥ ३३॥

भक्ति से भावावेश होता है। भक्ति से देवप्रार्थना करो यह श्रुति तात्पर्य है।

परे तु वृत्त्यतेकत्वात् कर्णेभिरिति युज्यते।
भवन्तु भद्रविषयाः सर्वा मे कर्णवृत्तयः॥ ३४॥
न चात्रातिशयोक्तिर्वा भावावेशोक्तिरेव वा।
तथाप्येव वृतोदेयो वरो भवति दैवतैः॥ ३५॥

दूसरे लोगों का कहना है कि कर्णवृत्तियों के बहुत्व से बहुवचन है। अतिशयोक्ति या भावावेशोक्ति नहीं है। यदि हो तो भी मांगा वरदान देना ही पडता है।

निद्रां वाक्स्खलितेनैव कुम्भकर्णोऽवृणोद्वरम्।
यथावृतं तथैवादात्तस्मै च भगवान् वरम्॥ ३६॥
शिरः स्पृशेयं यस्यैव भस्मीभवतु तत्क्षणम्।
वृकासुरो वरं वव्रेऽदत्त शम्भुस्तथा वरम्॥ ३७॥
अशक्यवरमात्रं तु विनिषिध्यन्ति देवताः।
कर्णायुतं हि नाशक्यं सहस्राक्षत्ववद्धि तत्॥ ३८॥

**कर्णायुतपदेनातः तदिष्टाः कर्णवृत्तयः।**
**युगपच्छृणुयां शब्दानर्थांश्चाऽयुतशः प्रभो॥३९॥**
**भद्रं कर्णेभिरित्यादौ ततः कर्णादिवृत्तयः।**
**अर्थः शब्दश्च विषयः कर्णशब्देन लभ्यते॥४०॥**

उदाहरणार्थ वाणी के स्खलन से कुम्भकर्ण ने निद्रा वर मांगा, वही दिया। वृकासुर ने जिसका शिर स्पर्श करूं वही भस्म हो जाये, वर मांगा वही दिया। अशक्य वर का ही देवता निषेध करते हैं (जैसे अमरत्वादि) कर्णायुत तो सहस्राक्ष के समान अशक्य नहीं है। परंतु दिया नहीं। अतः भद्रं कर्णेभिः से कर्णवृत्ति ही विवक्षित है।

**शृणोति शब्दमिति वत् शृणोति घटमित्यपि।**
**लोकैः समर्थितः किं च चिन्तामणिकृदादिभिः॥४१॥**

अर्थ शब्द दोनों शृणोति का विषय है। घट शब्द सुनता है, घट सुनता है दोनों होता है-यह लोकसमर्थित है, चिन्तामणिकारादि नैयायिक समर्थित भी है।

**आत्मा श्रोतव्य इति न शब्दश्रवणमुच्यते।**
**उच्यते शाब्दबोधस्य विषयीकरणं ततः॥४२॥**

आत्मा श्रोतव्य यह शब्दश्रवणमात्र नहीं बताया। शाब्दबोध विषयीकरण बताया।

**वचनव्यत्ययेनेदं छान्दसेन समीरितम्।**
**कर्णाभ्यामिति तस्यार्थ उवटाचार्यदर्शितः॥४३॥**

उवटाचार्य ने वचन व्यत्यय से कर्णाभ्यां ही अर्थ बताया।

**समूहप्रार्थनायां स्याद् बहुत्वं तु विवक्षितम्।**
**वचनव्यत्ययोऽन्यत्र त्वित्यन्ये व्याचचक्षिरे॥४४॥**

सामूहिक प्रार्थना में बहुत विवक्षित है। वैयक्तिक प्रार्थना में वचन व्यत्यय है ऐसी भी मान्यता है।

**लौकिकं भद्रमयनं श्रौतं स्यात्पारमार्थिकम्।**
**लभ्यंतदुभयं कर्णैः शृणुयाम जगत्पते॥४५॥**

मार्गरूप भद्र लौकिक है। प्रास्तव्य भद्र श्रौत है, पारमार्थिक है। दोनों को हे भगवान हम कानों से सुनें।

नन्वेतदुभयं भद्रं निर्वक्तुं नैव शक्यते।
लौकिकानामनित्यत्वा-दन्यस्याविषयत्वतः ॥ ४६ ॥
किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत्।
वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४७ ॥

पू. - किन्तु ये दोनों भद्र अशक्य निर्वचन है। लौकिक भद्र अनित्य होने से भद्र ही कैसा?। पारमार्थिक तो अविषय है। भागवत में कहा है- द्वैत अवस्तु (मिथ्या) होने से भद्र-अभद्र भेद नहीं होता। जो वाणी से कथित और जो मन से ध्यात है वह मिथ्या है।

मैवं गुरुमुखोद्भूत-ममृतं वचनं श्रुतेः।
उक्तं चैतद् शुकमुखा-दमृतद्रवसंयुतम् ॥ ४८ ॥
अमृतत्वस्य हेतुत्वादमृतं स्याद्गुरोर्वचः।
निवृत्ततर्षैरुद्गीत - भवामय - महौषधम् ॥ ४९ ॥

उ. - नहीं। गुरुमुख निःसृत वचन अमृतत्व हेतु होने से अमृत है। अतः भद्र है। निवृत्ततर्षैः इत्यादि श्लोक में यह स्पष्ट है।

भद्राऽभद्राविवेको न द्वैतस्य त्वनृतत्वतः।
कथं तत्र विभागोऽयं क्रियते भवतेति चेत् ॥ ५० ॥
अमृतत्वस्य हेतुत्वा-ऽहेतुत्वाभ्यां विभज्यते।
ऋतत्वव्याप्यता नैव विभागस्योपगम्यते ॥ ५१ ॥

समस्त द्वैत अनृत होने से उसमें विभाग कैसे? अमृत हेतुत्व अमृत-अहेतुत्वरूपी धर्मद्वय से हो जायेगा। विभाग ऋतत्व व्याप्य नहीं है।

स्वपुष्पे शशशृङ्गे च को विभागो विधीयताम्।
विकल्पमात्रं तत्र स्या-त्तद्वदत्रेति चेन्न तत् ॥ ५२ ॥
गुणाहौ रज्जुसर्पे च को विभागो विधीयताम्।
विभागोऽस्ति तथाप्येव तयोः को पि विलोक्यते ॥ ५३ ॥

रज्जुसर्पाद् भयोद्विग्नो द्रागित्येवापसर्पति।
शुक्तिरूप्यं माऽन्यो ग्रहीदित्युपसर्पति॥५४॥

आकाश पुष्प में और शशविषाण में क्या विभाग है? मात्र विकल्प वह है। वैसे भद्र अभद्र भी है। नहीं। रज्जु सर्प में और शुक्ति रजत में क्या विभाग है? फिर भी विभाग है। रज्जु सर्प को देखकर डर के मारे वहां से दूर आदमी भाग जाता है। शुक्तिरूप्य देखकर लोभ के मारे लोग कोई दूसरा न उठा ले जाये इसके लिये उसके समीप भाग आता है।

व्योमपुष्पादिकमसद् गुणाहिः प्रतिभासिकः।
व्यावहारिकमुर्व्यादि ब्रह्मैकं पारमार्थिकम्॥५५॥
भद्राभद्र विभागोऽयं भवति व्यावहारिके।
क्वचिद् भवत्यसौ लोके विभागः प्रातिभासिके॥५६॥
हस्त्यादिदर्शनं भद्रं श्यामदन्ताद्यभद्रकम्।
गुर्वीशदर्शनं भद्रमभद्रं राक्षसेक्षणम्॥५७॥
भद्रा ब्रह्मकथाऽभद्रा विटचौरकुकृत् कथा।
तथा च भद्रं कर्णेभिः शृणुयामेति भण्यते॥५८॥

आकाश पुष्पादि असत् है। रज्जु सर्पादि प्रातिभासिक है, पृथिवी जलादि व्यावहारिक है, ब्रह्म मात्र पारमार्थिक है। भद्र-अभद्र विभाग व्यावहारिक में और क्वचित् प्रातिभासिक में है। हाथी आदि का स्वप्न में दर्शन भद्र है। काले दांतवाले आदि का दर्शन अभद्र है। भगवान का, गुरु का दर्शन भद्र है, राक्षस दर्शन अभद्र है। ब्रह्म कथा भद्र है। विट-चौर कथा अभद्र है। अतः भद्रं कर्णेभिः शृणुयाम कहा।

अमृतत्वस्य हेतुत्वा-दमृतं स्याद्गुरोर्वचः।
निवृत्ततर्षैरुद्गीतं भवौषधमुदाहृतम्॥५९॥
आचार्यवान् हि पुरुषो वेद तत्त्वमिति श्रुतिः।
अस्तिकश्चिद्विशेषोऽत्त आचार्यवचसि स्थितः॥६०॥
आचार्यश्चैव विदिता साधिष्टं प्रापदित्यपि।
समर्थयति तत्तत्त्व - मन्यथानुपपत्तितः॥६१॥

भद्रास्तु वैदिका स्मार्ता महन्मुखविनिःसृताः।
भद्रतात्पर्यताहेतो-रिति तत्त्वविदो विदुः॥६२॥
वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र कीर्त्यते॥६३॥
मङ्गलं भगवान् विष्णुर्मङ्गलं भगवान् शिवः।
अतिकल्याणरूपत्वाद् ब्रह्मतन्मङ्गलं विदुः॥६४॥

गुरुवचन अमृत हेतु होने से अमृत है। निवृत्ततृष्णा गीत भवरोगौषध है। आचार्यवान पुरुष ही ब्रह्म को जान पाता है। आचार्यवचन में कुछ विशेषता है ही। आचार्यप्राप्त विद्या ही उत्तम है। भद्रतात्पर्य होने से वेदशास्त्र गुरुवचन भद्र है। वेद, रामायण, पुराण, महाभारत सर्वत्र आदि, मध्य, अन्त में हरि का वर्णन है। भगवान विष्णु मंगल है। भगवान शिव मंगल है। अति कल्याणरूप ब्रह्म मंगल है।

मा भूद्विषयता तस्य स्वप्रभत्वात्प्रभासताम्।
शब्देनाऽऽवृतिभङ्गात्तु स्वप्रकाशं प्रकाशते॥६५॥

ब्रह्म कर्णादि विषय नहीं स्वयंप्रकाश है। शब्द से आवरण भंग तो होता ही है।

## देवाः

देवाः सम्बोधनमिदं देवत्वाद् भद्रलक्षणाः।
भद्रेषु खलु कार्येषु भद्रा एव सहायकाः॥६६॥

देवाः यह सम्बोधन है। देवता भद्ररूप होने से वे भद्र कार्यों में सहायक हैं।

द्योतन्ते द्योतयन्ते वा तेन देवा इतीरिताः।
अनुगृह्णन्ति ते कर्णप्रभृतीनीन्द्रियाणि हि॥६७॥

स्वयं द्योतमान हैं अतः देव है। अन्य को द्योतित करते हैं कराते भी हैं। इसलिये वे देव कहलाये। श्रोत्रादि इन्द्रियों को वे अनुगृहीत भी करते हैं।

अधिष्ठातार एते स्युः श्रोत्रादीनां पृथक् पृथक्।
अधिकारस्थिता एते नियन्तारश्च सम्मताः॥६८॥

ये देव श्रोत्रादि के अधिष्ठाता एवं नियन्ता हैं, आधिकारिक हैं।

नन्वेक एव सर्वेषां नियन्ता श्रवसां मतः।
दिग्देवतेति विख्यातो बहूक्तिः कथमादृता॥६९॥
न च वाच्यं द्युलोकास्था सम्बोध्यन्तेऽखिला इति।
एकोऽनुग्राहको यत्र प्रार्थ्यन्तां सकलाः कुतः॥७०॥
न च तत्रैकको मुख्यस्तदन्ये तत्सहायकाः।
इति वाच्यं यतस्तत्र प्रमाणं नोपलभ्यते॥७१॥

पू. - सभी श्रोत्रों का एक ही दिग्देवता नियन्ता है। तब बहुवचन कैसे? देवलोकस्थ सब देवताओं का सम्बोधन व्यर्थ है। क्योंकि अनुग्राहक एक ही होता है। एक मुख्य है बाकी उसके सहायक है ऐसा भी नहीं है क्योंकि इस में कोई प्रमाण नहीं है।

शृणवशेषाः समुच्चित्य स्वस्वाधिष्ठातृदेवताः।
सम्बोध्यन्तेऽत्र शेषोप-लक्षणत्वं यतो मतम्॥७२॥

उ. - सुनिये यहां समस्त अधिष्ठातृ देवताओं का समुच्चित सम्बोधन है। श्रोत्र और अक्ष दो ही यहां बताये हैं। वे अन्य सबका उपलक्षण है।

यद्वाम्रपातमश्रौषीत्कर्णो नेत्रमलोकत।
पादोऽधावत् करोऽगृह्णाज्जिह्वया रसमन्वभूत्॥७३॥
सुखोत्पत्ताविन्द्रियाणामेवमस्ति समुच्चयः।
समुच्चयश्च देवानां बहुत्वोक्तिरतोऽस्त्विह॥७४॥
गुरुं नमति साष्टाङ्गं शृणोति श्रवसा श्रुतिम्।
मनुते च मनो बोधो बुद्ध्येत्यत्र समुच्चयः॥७५॥
तत्र तद्देवतानां च समुच्चितिरपेक्षिता।
कर्णैभिरिति मुख्यत्वात् देवास्तत्र समाः समे॥७६॥

अथवा ऐसा समझिये-आम गिरा आवाज सुनी कान ने, तब आंख ने देखा, पांव दौडा, हाथ ने उठाया, जिह्वा ने रस चूसा रसानुभूति हुई। यहां अन्तिम कार्य में सब इन्द्रियां क्रमशः समुच्चित हुई, तब उनके देवताओं का भी समुच्चय निश्चित है। प्रकृत में गुरु को साष्टांग प्रणाम

करता है (आठ अंग उसमें आये) श्रोत्र से श्रवण हुआ, मन ने मनन किया, बुद्धि से बोध हुआ। यहां भी उन करणों का और देवताओं का क्रम समुच्चय है अतः देवाः यह बहुवचन है। मुख्य कार्य श्रवण होने से कर्णेभिः कहा। देवता सभीं समान है। प्रत्येक कार्य में सब का क्रम समुच्चय है ही।

**देवाः सन्तो वयं भद्रं कर्णेभिः शृणुयाम वा।**
**देवो भूत्वा यजेद्देवमित्युक्त्येत्यपि योजना॥७७॥**

देवं होकर हम कानों से भद्र श्रवण करे ऐसी भी योजना हो सकती है। देवो भूत्वा देवं यजेत् ऐसा वचन भी है। भद्र श्रवण भी कर्णदेवता पूजन ही है।

## भद्रं पश्येमाक्षभिः

**असं जातविरोधित्वात् पश्येमेति यथाश्रुतम्।**
**छान्दसत्वादनङ्ङक्ष्णो हलादावक्षभिस्ततः॥७८॥**
**साक्षात्त्वं पश्यतेरर्थ इन्द्रियाण्यक्ष शब्दतः।**
**अनैस्त्वं छान्दसमिति यदा व्याख्यायते तदा॥७९॥**
**दोषः पदद्वयेऽपि स्यात् तद्वरं प्रथमोदितम्।**
**एवं महीधरादीनामाशयोऽत्रावलोक्यते॥८०॥**
**साक्षात्कुर्याम इत्यर्थः पश्येमेत्यस्य वर्णितः।**
**इन्द्रियाणि च सर्वाणि प्रोच्यन्तेऽक्षपदेन च॥८१॥**
**असंजातविरोधित्वं वाक्येषु न पदेषु तु।**
**वाक्यार्थचिन्तने हि स्याद् विरोधावगतिर्यतः॥८२॥**
**अधिकार्थत्वलाभश्च स्यादेवं विवृते सति।**
**इत्येवं सायणाचार्या अन्ये च व्याचचक्षिरे॥८३॥**
**उभयं स्वीकृतं सद्भिरुभयं संगतं भवेत्।**
**तस्माद् व्याचक्ष्महे तावदुभयं वयमेव च॥८४॥**

विरोध प्रथम उपस्थित न होने से पश्येम 'देखें' ऐसा यथाश्रुत अर्थ

है। अक्षि आंख को कहते हैं। इ को 'अन्' आदेश 'अक्षिदधि' सूत्र से अजादि में होता है। हलादि में छान्दस है। नलोप से अक्षभिः हुआ। अन्य व्याख्या में पश्येम साक्षात्कार सामान्यवाची है। अक्ष-सभी इन्द्रिय है। भिस् को ऐस् छान्दस होने से नहीं हुआ। इस में दोनों पदों में थोडी थोडी गडबडी है। प्रथम व्याख्या में एक ही जगह है। यह महीधरादि भाष्यकार मत है। श्री सायणाचार्यादि द्वितीय को मानते हैं। संजात विरोध तो बोधोत्तर होता है। वाक्य में होता है, पद में नहीं। अतः पश्येम का अनुभव करना अर्थ है। अधिकार्थ प्राप्ति द्वितीय में लाभ है। दोनों अर्थ महापुरुषोक्त होने से दोनों का हम विस्तार करते हैं।

बहुत्वादक्षिवृत्तीनामुक्तमक्षभिरित्यदः ।
यद्वा भाववशादुक्तं बहुत्वेनाक्षि साशयम्॥८५॥

अक्षिवृत्तियां अनेक होने से अक्षभिः यह बहुवचन है अथवा भाववश वह है।

भद्रमक्षायुतैरेव पश्येम हि न चाशुभम्।
अभद्रं नैव पश्येम भगवत्कृपया वयम्॥८६॥
अत्रानुवर्तमाने हि भद्रे पुनरुदीरणम्।
अन्यव्यावृत्तये नूनमर्थाधिक्यार्थमेव वा॥८७॥

हजारों आंखों से हम भद्र ही देखें अभद्र नहीं। प्रथम पाद भद्र की अनुवृत्ति होने से पुनः उक्ति अन्य व्यावृत्ति के लिये या अधिकार्थ है। जैसे सम्यक् सम्यक् कहें तो अत्यन्त सम्यक् अर्थ होता है।

यद्वास्ति त्रिविधं चक्षु लौकिकं दिव्यमेव च।
ज्ञानचक्षुस्तृतीयं च त्रयं दर्शनसाधनम्॥८८॥
प्रथमं चर्मचक्षुः स्याद् दिव्यचक्षुस्तथापरम्।
ज्ञानचक्षुस्तृतीयं स्याद् बहुत्वोक्तिश्च तैर्भवेत्॥८९॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुरित्यत्र द्वयमीरितम्॥९०॥

विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः।
इत्यत्र हरिणा प्रोक्तं तृतीयं चक्षुरेव च॥ ९१॥
एतैरक्षभिरित्येषा बहुत्वोक्तिश्च संगता।
तयैवातिशयो लभ्य आधिक्यं च ततस्तराम्॥ ९२॥

अथवा लौकिक, दिव्य एवं ज्ञान चक्षु ऐसे तीन चक्षु है। गीता में न तु मां शक्यसे श्लोक में दो चक्षुकही पश्यन्ति ज्ञान चक्षुषः में तृतीय। अक्षभिः इस वहुवचन की इसीसे उपपत्ति है। उसीसे अतिशय आधिक्यादि भी सुगम है।

लौकिकं शक्यते द्रष्टुं भद्रं गुरुगवादिकम्।
ब्रह्मलक्षणभद्रं तु न शक्यं चर्मचक्षुषा॥ ९३॥

गुरुदर्शन गो दर्शनादि लौकिक भद्र दर्शन चक्षु से होता है। ब्रह्मरूपी भद्र नहीं।

दृश्यते कलशादिर्यदस्ति भाति प्रियात्मना।
ब्रह्मदर्शनमिच्छन्ति केचित्तत्र मनीषिणः॥ ९४॥
घटावच्छिन्नरूपत्वादपरिच्छिन्नलक्षणम् ।
न भासते ततो नैव मोक्षस्तु घटदर्शने॥ ९५॥

घटदर्शन में जो अस्तिभाति प्रियदर्शन है वह ब्रह्मदर्शन है यह भी मानते है। तो उसीसे मोक्ष होगा? नहीं। वह परिच्छिन्न ब्रह्मदर्शन है अपरिच्छिन्न दर्शन नहीं है।

घटादित्यागतो यत्स्यादस्तिभातिप्रियेक्षणम्।
तज्ज्ञानचक्षुषैवेति वक्ष्यमाणे स्फुटीभवेत्॥ ९६॥

घटादित्याग से अस्ति भाति प्रियमात्रदर्शन जो होगा वह ज्ञानचक्षु से यह आगे स्पष्ट होगा।

ध्रुवेण तपसा दृष्टो विष्णुस्तद्दिव्यचक्षुषा।
विश्वरूपं च पार्थेन स्वप्ने पुण्यात्मना क्वचित्॥ ९७॥
कैलासशिखरासीनं दिव्यतेजःसमुज्ज्वलम्।
स्वप्ने पश्यति शम्भुं यत् तद्धि स्याद्दिव्यचक्षुषा॥ ९८॥

तत्प्रातिभासिकं केचिदूचिरे तदसद्वचः।
तत्रानुभूयमानं हि दिव्यत्वं केन वार्यताम्॥९९॥
परमानन्दसन्दोहो भक्तैस्तत्रानुभूयते।
नैवानन्दकला तु स्यात् प्रातिभासिकवस्तुना॥१००॥
स्वप्ने भगवदादेशो बहुधैवास्ति वर्णितः।
सफलः सप्रभावश्च तस्माद्दिव्यो न संशयः॥१०१॥

ध्रुव ने तपः प्राप्त दिव्य चक्षु से विष्णु दर्शन किया, अर्जुन ने विश्वरूप देखा, पुण्यात्मा भगावान को देखते हैं कैलास शिखरासीन दिव्य तेजयुक्त शंकर का दर्शन करते है उसे कोई प्रातिभासिक मानते है वह गलत है, उसमें दिव्यता प्रत्यक्ष है, परमानन्द प्राप्ति होती है। प्रातिभासिक से क्या आनन्द होगा। व्यावहारिक से भी ऊंचा आनन्द अनुभव होता है। स्वप्न में बहुतों को भगवान का सच्चा आदेश मिलता है जो सफल भी होता है। अतः स्वप्न में भगवद्दर्शन ही होता है, दिव्य होता है।

नन्वेवं पितृपुत्रादेर्दिव्यं कस्मान्न दर्शनम्।
तद्वचोऽपि किल स्वप्ने कदाचित्सत्यमीक्ष्यते॥१०२॥
मैवं व्यापी महेशानः स्वेच्छामयवपुस्तथा।
न चैवं पितृपुत्रादिर्वैलक्षण्यमतः स्थितम्॥१०३॥

सपने में पितृ पुत्रादि का दर्शन भी दिव्य क्यों न माना जाये। उनका भी वचन कभी सत्य निकलता है। नहीं। ईश्वर व्यापक एवं स्वेच्छामय शरीरवाला होने से विलक्षणता है। पिता आदि न व्यापक है और न स्वेच्छामय शरीरी है।

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढाना नुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥१०४॥
इत्येवं भगवानेव विषये ज्ञानचक्षुषः।
व्याख्यातवानिति ततस्तत्र चिन्ता विधीयते॥१०५॥

उत्क्रामन्तं इत्यादि श्लोक ज्ञान चक्षु के बारे में भगवान ने ही कह दिया। उस पर विचार करें।

**एकं शरीरं संत्यज्य यदा देहान्तरं व्रजेत्।**
**मध्ये तु निरुपाधि स्यात्तस्य वीक्षणमुच्यते॥१०६॥**

एक शरीर छोडकर दूसरे शरीर में जाते समय मध्य में आत्मा निरुपाधि होगा। उसका दर्शन उत्क्रामन्तं में बताया।

**पिण्डात् पिण्डान्तरं यान्तमुत्क्रामन्तमिहोचिरे।**
**द्वैतिनः केचन जनाः, संगतं तन्न विद्यते॥१०७॥**
**ज्ञानिनोऽज्ञानिनश्चापि मृत्युकाले विमूर्च्छिताः।**
**भवन्तीति कथंकारं पश्यन्तीत्युपपद्यते॥१०८॥**

उत्क्रामन्तं का इस मनुष्य शरीर पिण्ड से दूसरे पिण्ड में जाते हुए को ऐसी व्याख्या द्वैतियों की है। वह संगत प्रतीत नहीं होती। मरते समय ज्ञानी अज्ञानी सभी मूर्च्छित होते हैं, वे कैसे आत्मा को देखेंगे।

**न च नो मूर्च्छति पुमान् म्रियमाणोऽपि कश्चन।**
**अब्रुवाणत्वतो मूर्च्छां विपर्यस्यन्ति लौकिकाः॥१०९॥**
**तामाधुनिकयन्त्रेण म्रियमाणस्य देहिनः।**
**वैज्ञानिका जगुर्मूर्च्छां कथं तदपलप्यताम्॥११०॥**

यह कहें कि मरते समय मनुष्य मूर्च्छित नहीं होता, बोलता चालता न होने से लोग कहते हैं ज्ञान लुप्त हो गया, मूर्च्छित हुआ। नहीं। आधुनिक यन्त्र सहायता से वैज्ञानिकों ने मूर्च्छा का पता लगाया है।

**जानाति मामिति मुहुः पृच्छन्त्यन्त्युपतापिनम्।**
**अनुत्क्रान्तो हि जानातीत्याहस्म श्रुतिगीरपि॥१११॥**

मरते हुए को ज्ञातिवाले पूछने लगते हैं आप मुझे पहचानते हैं? जब तक उत्क्रमण न हो तब तक जानते हैं। फिर ज्ञान नहीं रहता ऐसा श्रुतिवचन भी है।

**कथं च ज्ञानिनां जन्म भवति ज्ञानचक्षुषाम्।**
**उत्क्रामन्ति न तत्प्राणा ब्रह्म सन्मुच्यते स हि॥११२॥**

और ज्ञानचक्षु ज्ञानियों का जन्म कैसा? उनका प्राणोत्क्रमण नहीं होता। यहीं ब्रह्म होकर ब्रह्मलीन होते है।

ननु भाष्ये प्रागुपात्तदेहत्यागोऽत्र भाषितः।
सत्यं देहाः स्थूलसूक्ष्मबीजाख्याः संमतास्त्रयः॥ ११३॥
स्वप्ने स्थूलं परित्यज्य प्रविशेत् सूक्ष्ममेष हि।
सुषुप्तौ कारणं तच्च त्यक्त्या स्थूलं विशत्यसौ॥ ११४॥
सन्धिकाले त्वदेहत्वाच्चितिः शुद्धैव भासते॥ ११५॥

भाष्य में भी तो देहं पूर्वोपात्तं परित्यजन्तं ही व्याख्या है। बात सही है। स्थूलसूक्ष्मकारण तीन शरीर है। स्वप्न में स्थूल देह को छोडकर सूक्ष्म ग्रहण करता है, सूक्ष्म भी छोडकर सुषुप्ति में कारण ग्रहण करता है। कारण को छोडकर सूक्ष्म या स्थूल में आता है। सन्धिकाल में अदेह होने से शुद्ध ही भासता है।

नन्वभद्रं न पश्यन्ति क्वचन ज्ञानचक्षुषा।
व्यावर्त्यविरहाद् ज्ञान-चक्षुःपक्षे वृथार्थना॥ ११६॥
व्यवर्त्यविरहेऽप्येव विध्यर्था प्रार्थनेति तु।
एकप्रसरताभङ्गात् स्वीकर्तुं नैव शक्यते॥ ११७॥
नैवमेवादिविरहाद् व्यावृत्तिः क्वापि शाब्दिकी।
नास्तीत्यार्थिक्युपेतेति न किंचिदसमञ्जसम्॥ ११८॥

पू. - ज्ञानचक्षु से अभद्रदर्शन होता नहीं है। अतः प्रार्थना व्यर्थ होगी। भद्रं कर्णेभि आदि में व्यावृत्त्यर्थ एवं भद्रं पश्येम में ज्ञान चक्षु अंश में विधानार्थ (ज्ञानचक्षुः प्रार्थना में पर्यवसित) मानें तो एक प्रसरता भंग होगा। नहीं। एवकार आदि के न होने से इस मन्त्र में कहीं भी व्यावृत्ति शब्दार्थ नहीं है। आर्थिक ही मानना पडेगा तो यहां आर्थिक ज्ञान चक्षुः प्रार्थना ही मान सकते हैं।

गृहीत्वैतानि संयातीत्युक्तेः शुद्धा न सेति चेत्।
मैवं पिण्डान्तरं तत्र श्लोके तावद् विवक्षितम्॥ ११९॥
अत एव न शुद्धं तच्चैतन्यं गतिसत्वतः।
अत्र तस्मिन् स्थिते तत्तद्वृत्त्यातत्तत्प्रकाशनम्॥ १२०॥

परंतु इससे पूर्व श्रोत्रादि को लेकर उत्क्रमण करता है बताया है। ठीक

है। वहां जन्मान्तर पिण्डान्तर विवक्षित है। श्रोत्रादि को लेकर जाता है इस कथन से ही वहां शुद्ध चैतन्य नहीं है यह सिद्ध होता है। गति आदि विशिष्ट चैतन्य में ही संभव है। प्रकृत में स्थूल सूक्ष्मादि में आत्मा की गति नहीं है। किन्तु तत्तद्वृत्ति से ततत्प्रकाशन मात्र है। शरीरद्वयवृत्ति भान के मध्य में शुद्ध प्रकाश होता है। यही ज्ञान चक्षु देखते हैं।

**नन्वेवं स्थितमित्येतत् पुनरुक्तं भविष्यति।**
**प्रागवस्था द्वयस्थं स्यादत्र वृत्तिद्वयस्थितम्॥१२१॥**
**तत्रावस्थाद्वयस्योक्तमन्तरालस्थमादिमे ।**
**अत्र वृत्तिस्थितं तावच्चैतन्यं प्रणिगद्यते॥१२२॥**
**वृत्तिस्थं वृत्तिहानेन शुद्धं पश्यन्ति वेदिनः।**
**इति पूर्वाद् विशिष्टोऽयमन्तराले ह्युभौ समौ॥१२३॥**

यदि उत्क्रामन्ततं का अवस्थाद्वयान्तरालस्थं अर्थ करते हैं और स्थितं का वृत्तिद्वयान्तरालस्थं अर्थ करते हैं तो पुनरुक्ति होगी। अवस्था भी तो वृत्ति ही है। नहीं। स्थितं का वृत्तिद्वयान्तरालस्थं अर्थ नहीं, किन्तु वृत्तिस्थित अर्थ हैं। वृत्तिस्थ को वृत्तिभागत्याग कर शुद्ध दर्शन करते हैं इसमें ज्ञान चक्षु में गरीयस्त्व (अधिक गौरव) है।

**स्थितं शरीरे सोपाधि-मत्युपाधिप्रहाणतः।**
**वस्तुतो निरुपाध्येव पश्यन्ति ज्ञानचक्षुषः॥१२४॥**

शरीर में स्थित आत्मा सोपाधि होने पर भी उपाधि को त्यागकर वस्तुतः निरुपाधि को ही ज्ञानचक्षुवाले देखते हैं।

**भुञ्जानस्य खलूपाधिर्भवेद् दृढतरस्थितिः।**
**भोगे रागोऽपि भवति तद्धानमतिदुर्लभम्॥१२५॥**

भुञ्जानं वा में भोग उपाधि अधिक दृढतर है। क्योंकि भोग में राग होता है। राग बन्धन को दृढतर बनाता है। उसको त्यागना दुर्लभ ही है।

**रागं तदाश्रयोपाधि-मपि त्यक्त्वा मनीषिणः।**
**शुद्धं पश्यन्ति चैतन्यं यथैव जनकादयः॥१२६॥**

**गुणाः सत्त्वादयस्ते च सुखदुःखादिलक्षणाः।**
**सुदृढोपाधयस्तत्रापीक्षन्ते ज्ञानचक्षुषः॥१२७॥**

गुणान्वितं में गुण सत्त्वरज आदि। ये और भी दृढ उपाधि हैं उन्हें भी छोडकर ज्ञान चक्षु शुद्ध आत्मा को देखते हैं।

**सुखं कदाचित् सुशकं त्यक्तुं धीरैरनास्थया।**
**दुःखं कण्टकवेधादि प्रस्मर्तुं शक्यते कथम्॥१२८॥**

सुख विस्मृत करना आसान है। पर दुःख कांटे का चुभना आदि कैसे भुलायेंगे।

**शूलारूढोऽपि माण्डव्यः सस्मार ब्रह्म निर्मलम्।**
**न क्लिष्टोऽभूत्कथैषा तु भवेत् कृतयुगे नृषु॥१२९॥**

सूली पर चढाये जाने पर भी माण्डव्य ऋषि ने निर्मल ब्रह्म स्मरण किया। वे क्लेशाकुल नहीं हुए ऐसी कथा सत्ययुग में हो सकती है। कलियुग में सुगम नहीं है।

**अतो गुणान्वितं यस्तु पश्यत्यात्मानमव्ययम्।**
**ज्ञानचक्षुःषु मूर्धन्यो भवरोगहरो हि सः॥१३०॥**

सूली की बात छोडो। गुणान्वित को गुण विवर्जित जो देख पाते हैं वे सर्वोत्तम ज्ञानचक्षु देखता है।

**नत्वेवं दर्शनं तावल्लोकानां दुर्लभं भवेत्।**
**सत्यं साधनसम्पत्त्या दुर्लभं लभते बुधः॥१३१॥**

ऐसा दर्शन फिर दुर्लभ ही होगा। सच बात है। पर साधनों से दुर्लभ को भी उत्तम साधक पा लेता है।

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे॥१३२॥**

कोई ध्यान से, कोई सांख्य योग से, कोई कर्म योग से आत्मदर्शन करता है।

**ध्यानेनेत्यस्य हि ध्यानसंस्कृतेनेति भाष्यकृत्।**
**आत्मना मनसेत्येतत् मनोवृत्त्या श्रुतोत्थया॥१३३॥**

ध्यान संस्कृत मन से अर्थात् श्रुतिजन्य मनोवृत्ति से आत्मदर्शन होता है।

ध्यानेन श्रवणादूर्ध्वं निदिध्यासनरूपिणां।
पश्यन्ति मनसात्मानमित्यन्ये व्याचचक्षिरे॥१३४॥

निदिध्यासन से मन से आत्मदर्शन करते हैं ऐसी दूसरों की व्याख्या है।

सांख्ययोगः खलु गुणपुरुषान्यत्वदर्शनम्।
कर्मयोगोऽनिशं सर्वकर्मफलस्येशे समपर्णम्॥१३५॥

गुण (प्रकृति) पुरुष विवेचन सांख्ययोग है। सर्व कर्मों का ईश्वर में समर्पण कर्मयोग है।

एवं साधनसम्पत्त्या दुर्लभं सुलभं भवेत्।
आत्मनो दर्शनं भद्रमिति तन्नातिदुर्गमम्॥१३६॥

इस प्रकार साधन संपत्ति दोनों पर भद्र आत्मदर्शन दुर्लभ भी सुलभ हो जाता है।

न साधनविकल्पोऽत्र पुंविकल्पस्तु दर्शितः।
ध्यानं मुख्यं भवेदत्र निदिध्यासनलक्षणम्॥१३७॥
यस्य ध्यानं न सुगमं सांख्ययोगं स आश्रयेत्।
नित्यानित्यविवेकाख्यं सांख्ययोगं प्रचक्षते॥१३८॥
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्।
इत्युक्तेः सांख्ययोगेन वैराग्यमुपजायते॥१३९॥
रागाद्याक्रमणान्नूनं ध्यानं नैव प्रजायते।
वैराग्यात्तन्निरोधं तु सूत्रकारोऽप्यसूत्रयत्॥१४०॥
स्थितौ यत्नात्मकेऽभ्यासे वैराग्यं तूपकारकम्।
स्थित्युतरं च वैराग्यकार्यत्वात् तुल्यमीरितम्॥१४१॥
नोद्भवेत् सांख्ययोगश्चेत् कर्मयोगं समाचरेत्।
ईश्वरार्पणकर्मैव कर्मयोगो निगद्यते॥१४२॥
सा भक्तिरूपा नित्या च भगवत्स्मृतिसंहिता।
तत्प्रसाद्धि भवति वैराग्यादीत्युदीरितम्॥१४३॥

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात्।
साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम्॥ १४४॥

गीता में साधन विकल्प नहीं पुरुष विकल्प है। निदिध्यासनरूपी ध्यान मुख्य है। वह सहसा नहीं होता। रागादि से चित्त चञ्चल होता है। अतः नित्यानित्यविवेकरूपी सांख्ययोग करो। अनित्यमसुखं लोकं इत्यादि विवेक होने पर राग छूटेगा। इसलिये अभ्यासवैराग्याभ्यां तन्निरोधः ऐसा सूत्रकार ने कहा। स्थिति-ध्यानार्थ यत्न अभ्यास में उपकारक वैराग्य है। स्थिति के बाद भी वैराग्य चाहिये। नहीं तो फिर से चित्त चञ्चल होगा। इसलिये अभ्यास और वैराग्य को सम कोटि में रखा। यह विवेकरूपी सांख्ययोग भी नहीं बन पाता तो कर्मयोग करो (अभ्यासेऽप्यासमर्थोसि) ईश्वरार्पण बुद्धि से कर्म करना यही तो भक्ति है। वर्णाश्रम धर्मादि से हरितोषण होने पर वैराग्य एवं अन्य विवेकादि होंगे यह आचार्य ने भी कहा ही है।

अत्यशक्तस्य प्रथम-सोपानस्थस्य वर्ण्यते।
अथैतदप्यशक्तोसीत्येतत् प्रथमसाधनम्॥ १४५॥

पूर्व संस्कार रहित प्रथम सोपानस्थ के लिये वर्णन है-अथैतदप्यशक्तोसि इत्यादि।

ननु चान्येभ्य एव स्यात् श्रवणं न पुनः स्वतः।
किमिदं प्राह भगवान् श्रुत्वान्येभ्य उपासते॥ १४६॥

पू. - दूसरे से ही सुनते हैं, अपने से नहीं। यहां भगवान क्या कहना चाहते हैं।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्।
लोचनाभ्यां विहिनस्य दर्पणः किं करिष्यति॥ १४७॥
इत्युक्तेर्बोधसंपत्तौ स्वप्रज्ञाप्यस्ति कारणम्।
तद्धीनस्यापि चोद्धाःरहेतुमाह कृपानिधिः॥ १४८॥

जिसकी स्वयं प्रज्ञा नहीं, शास्त्र उसे क्या करेगा। आंख नहीं तो दर्पण क्या करेगा? इसलिये बोध संपत्ति में स्वप्रज्ञा भी चाहिये। उसके अभाव में दयालु हरि ने उद्धार हेतु कहा।

सन्तो दयालवस्तस्याप्युपायमनुवृण्वते।
जपाद्युपासनां कर्तुं तेषामुपदिशन्ति ते॥ १४९॥
मृत्युं रत्नाकरोऽज्ञोऽपि श्रुत्वा रामेति नारदात्।
व्यत्यस्तवर्णोऽप्यतरद् वाल्मीकिस्तदुपास्तितः॥ १५०॥

सन्त दयालु होते हैं, अज्ञों के लिये भी उपाय ढूंढ निकालते हैं। अज्ञ रत्नाकर को उलटा नाम जपवाकर तार दिया, वाल्मीकि बनाकर अमर बनाया।

इदं तु बोध्यं सकला कामधेनुसमा श्रुतिः।
लौकिकं वैदिकं चापि भद्रं शक्यग्रहं ततः॥ १५१॥

श्रुति कामधेनु सदृश होने से लौकिक वैदिक सभी भद्र यथाप्रसङ्ग अर्थ है।

वैश्वदेवपशोर्याज्यानुवाक्यायां च पठ्यते।
पूजाकर्मादिकेऽप्यादा-वेष मन्त्रोऽनुपठ्यते॥ १५२॥
यथाप्रसङ्गमर्थस्तु कर्तव्यस्तत्र तत्र च।
वेदान्तश्रवणार्थोऽयमर्थोऽदर्शीति बुध्यताम्॥ १५३॥

वैश्वदेव पशु याग में याज्यानुवाक्या में तथा पूजादि कर्म में भी यह मन्त्र पढा जाता है। प्रसङ्गानुसार अर्थ ज्ञातव्य है। वेदान्त श्रवणार्थ यह अर्थ दिखाया।

यजत्रा यजनीया हे देवा इति विशेष्यते।
वयं वा यजमानाः स्मो यज्ञत्रातार एव वा॥ १५४॥

यजत्रा यजनीया अर्थ है जो देवों का विशेषण होगा। यजत्राः का अर्थ यजभाना अर्थ करें तो पश्येम कर्ता का विशेषण होगा। यज्ञत्रातारः अर्थ भी हो सकता है।

## स्थिरैरङ्गैस्तुष्टुवाँसः

तुष्टुवांस स्तुवाना इ-त्येतदाह निरन्तरम्।
न ह्यस्ति कालनियम-श्छन्दसि व्यत्ययादपि॥ १५५॥

तुष्टुवांसः का अर्थ है स्तुति करते हुए। छन्द में काल नियम नहीं होता। व्यत्यय भी होता है।

स्थिरैरङ्गैः स्तुवन्तोऽत्र शङ्का श्रोतुः प्रजायते।
जिह्वया स्तूयते नाङ्गैः कथमेतद्विशेषणम्॥ १५६॥
नन्वङ्गमेव जिह्वापि मैवं व्यर्थं विशेषणम्।
शृणोम्यङ्गेन पश्यामि चाङ्गेनेति हि को वदेत्॥ १५७॥
जिह्वात्वं स्यात् करणता-वच्छेदकमतोऽपि च।
कर्णेभिरिति वद् युक्तं वक्तुं जिह्वाभिरित्यपि॥ १५८॥
स्थिरैरङ्गैर्वयं युक्ता इत्युक्तं सायणादिभिः।
तच्चायुक्तं स्वंय जिह्वा चञ्चलायदि तेन किम्॥ १५९॥
किं चाङ्गचलने स्तुत्यां का हानिः खलु जायते।
नृत्यन्तोऽपि स्तुतिं भक्ता गायन्ति द्रुतचेतसः॥ १६०॥
दृढैरशिथिलैरङ्गै — रित्युव्वटमहीधरौ।
दृढाङ्गत्वं यावदायुराशामात्रं तु मन्महे॥ १६१॥

स्थिर अङ्गों से स्तुति करते हुए यह कैसा? जिह्वा से स्तुति होती है। कहो कि जिह्वा भी तो अंग है। नहीं। तब विशेषण ही व्यर्थ होगा। दूसरी बात-मैं अंगों से सुनता हूं, अंगों से देखता हूं ऐसा कोई नहीं बोलता। स्तुति में कारणतावच्छेदक जिह्वात्व ही है। 'भद्रं कर्णेभिः' के समान जिह्वाभिः कहना ही उचित था। युक्त पद का अध्याहार सायणभाष्य में किया है। स्थिर अंगों से युक्त होकर हम स्तुति करे। पर जिह्वा चंचल हो तो गलत बोलती हो तो अङ्ग की स्थिरता किस काम की? फिर अंग हिलते रहे तो क्या हानि? भक्तलोग नाचते हुए भी तो स्तुति करते हैं! उवट एवं महीधर कहते हैं-अशिथिल अंगादियुक्त होकर पूरी आयु बितायें। यह तो आशामात्र होगी। क्या बुढापे में अंग शिथिल नहीं होंगे?

नम उक्तिं विधेमेति श्रुतौ भाष्यकृदाह च।
परिचर्यां वयं कर्तुमिदानीं ते न शक्नुमः॥ १६२॥

भूयिष्ठां ते नम उक्तिं विधेम के भाष्य में भी कहा-किन्तु वयमिदानीं

ते न शक्नुमः परिचर्यां कर्तुम् इत्यादि।

वयं पुनरिदं ब्रूमः प्रणवस्य जपः स्तुतिः।
स्तुत्यर्थात् प्रोपसृष्टात् स्यान्नौतेः प्रणव इत्यपि॥१६३॥

हम यहां पर यहीं कहेंगे कि प्रणव जप ही यहां स्तुति है। प्रपूर्वक णू धातु से 'ऋदोर' इस सूत्र से अप् प्रत्यय करने पर प्रणव होता है।

युञ्जीतात्मानमोमित्यो-मिति ब्रह्मेति हि श्रुतिः।
स्तोतव्यौ शब्दविषया-वोमित्येव न्यरूपयत्॥१६४॥
तुष्टुवांसोऽत्र किं केनेत्यस्ति जिज्ञासितं ततः।
श्रुत्युक्तावुपतिष्ठेते तावेव प्रथमं सताम्॥१६५॥

ओमित्यात्मानं युञ्जीत ओमिति ब्रह्म इस प्रकार स्तुति के लिये आवश्यक शब्द एवं विषय दोनों को बताया। 'तुष्टुवांसः' में ये दोनों अपेक्षित होने से श्रुत्युक्त ये दो ही प्रथम उपस्थित होते हैं।

तज्जपो मानसो मुख्या सैव चात्र स्तुतिर्यतः।
तदर्थचिन्तनं चैव सूत्रकृत् प्राह साधनम्॥१६६॥

मुख्य होने से मानस जप एवं तदर्थ चिन्तन को सूत्रकार ने साधनरूप से कहा (तज्जपस्तदर्थभावनं यह योगसूत्र यहां ग्रहणीय है)।

ब्रह्मसूत्रेषु तत्रोक्तमासीनः संभवादिति।
अनन्तरं च तत्रैव ध्यानाच्चेत्याह सूत्रकृत्॥१६७॥
स्थिरेष्वङ्गेषु भवति ध्यानं सम्यङ् न संशयः।
जपश्च सम्यग् भवति स्थिरेष्वङ्गेषु मानसः॥१६८॥

ब्रह्मसूत्र में अङ्गस्थैर्यार्थ 'आसीनः संभवात्' कहा। फिर 'ध्यानाच्च' यह भी बताया। ये दोनों-ध्यान और मानस अङ्गस्थैर्य से ही संभव है।

अपि चाहाऽचलत्वं चा-ऽपेक्ष्येति स्थिरतामपि।
तद् ध्यायतीव पृथिवी-त्यादि भाष्ये स्फुटीकृतम्॥१६९॥

'अचलत्वं चापेक्ष्य' सूत्र से स्थिरता बतायी। 'ध्यायतीव पृथिवी' इत्यादि से भाष्य में स्पष्ट किया।

एवमभ्यस्यतो नूनमन्तकालः सुखावहः।
तथा च भगवानाह गीतायामर्जुनं प्रति॥ १७०॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ १७१॥

इसका पहले से ही अभ्यास करो तो अन्तकाल शुभावह होगा। यह गीता में-ॐकार उच्चारण करते हुए और भगवत्स्मरण करते हुए शरीर त्यागने पर मोक्ष होगा से बताया।

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोतरम्॥ १७२॥
तत्रैकाग्रं मनःकृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये॥ १७३॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
इत्यादिना च हरिणा स्पष्टमेतत् प्रकाशितम्॥ १७४॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासन' इत्यादि गीता श्लोकों में भी यही स्पष्ट किया है।

शुचौ विविक्त आसीनो विधिवत्कल्पितासने।
अभ्यासेन्मनसा शुद्धं त्रिवृद् ब्रह्माक्षरं परम्॥ १७५॥
मनो यच्छेद् जितश्वासो ब्रह्मबीजमविस्मरन्।
इति भागवतेऽप्युक्त - स्त्रिवृद्ब्रह्मजपस्तथा॥ १७६॥
अविस्मरन्निति जपो मानसोऽत्रावगम्यते।
प्रणवः प्रणुतेरेव सुष्टुतिः प्रोपसर्गतः॥ १७७॥

भागवत में भी गीतोक्तक्रम से आसन पर स्थित होकर ॐकार का जप बताया। णु स्तुतौ धातु से प्रणव शब्द है। तुष्टुवांसः में भी धात्वर्थ वही। 'प्र' का ही अर्थ यङ् प्रत्यय का है।

स्थिरैरङ्गैर्युताः सन्त इत्यध्याह्रियतां श्रुतौ।
अध्याहारं विनाप्यर्थं दर्शयामोऽस्य संप्रति॥ १७८॥

स्थिरैः अङ्गै के बाद 'युताः' ऐसा अध्याहार श्रुति में कर लो। क्योंकि

अंङ्गों से स्तुति क्या होगी। स्थिर आसनस्थ पुरुष स्तुति करेगा। अध्याहार किये बिना भी अर्थ होगा।

अज्यमानत्वतोऽङ्गानि स्युर्घेऽञ्जेर्धञि वा पदम्।
विषयादिभिरज्यन्ते विशेषे सति देहिनाम्॥१७९॥

अञ्ज धातु का 'म्रक्षण' लिप्त होना आदि अर्थ है। अधिकरण में घञ् होने पर अङ्ग शब्द होगा। विषयादि से लिप्त होने पर अङ्ग कहलाते हैं.

गुरुस्पृष्टं हि मिष्टादि प्रसादं मन्वते बुधाः।
पूजादिनानासुकृतैरञ्जितौ तत्करौ यतः॥१८०॥

गुरुओं ने हाथ छुआया तो मिष्टान्नादि प्रसाद होते है। क्योंकि उन के हाथ पूजादि पुण्ययुक्त हैं।

स स्वाध्याय-प्रवचनप्रभावेणाञ्जितात् सदा।
आचार्यमुखतो विद्यामधीयीतेति च श्रुतिः॥१८१॥

आचार्य मुख स्वाध्याय प्रवचन से पुण्याञ्चित है। उसीसे स्वाध्यायाध्ययन करो।

दुष्टैः स्पृष्टं न चान्नं तु ग्राह्यं तद्दोषयुक्त्वतः।
तत्तद्दोषगुणैरक्तान्युच्यन्तेऽङ्गानि सज्जनैः॥१८२॥

दुष्ट स्पृष्ट अन्न अग्राह्य है। अंगों में दोष लिप्त है। तत्स्पृष्ट भी दोषयुक्त होगा

मघवन् यात भद्रं वो दध्यञ्चमृषिसत्तमम्।
विद्याव्रततपःसारं गात्रं याचत मा चिरम्॥१८३॥
तप आदि भिरक्तानि दधीचोऽस्थीन्युपावृतन्।
एवं विधैः स्थिरैरङ्गै-स्तुष्टुवांस इतीर्यते॥१८४॥

भगवान ने वृत्रवधार्थ दधीचि की हड्डियां मांगकर लेने को कहा। क्योंकि तपश्चर्यादि से वे परिपूत थे। वैसे स्थिर अङ्गों से स्तुति करने के लिये बता रहे हैं।

उरस्तः पृष्ठतो हस्तात् पादान्मूघ्नो महात्मनः।
अशृणोत् प्रणवारावं कर्णसंश्लेषणे यतिः॥१८५॥

नर्मदा किनारे एक संत थे। उनके शरीर में कहीं भी कान लगायें ओंकार की ध्वनि सुनायी पडती थी। ऐसी सिद्धि प्राप्त करें जिससे सभी अङ्गों से ॐकार स्तुति करे।

**कूपेऽनुखन्यमानेऽन्तः प्राङ् मृतस्य महात्मनः।**
**लोकाः शुश्रुवुरस्त्रस्तु विठलं विठलं स्वरम्॥ १८६॥**

कुआं खोदते समय एक भक्त किनारा सरकने से दब मरा। कालान्तर में वहां खोदते समय उस भक्त की अस्थियों से विठल विठल आवाज आ रही थी।

**अर्जुनस्य प्रसुप्तस्य केशेभ्यो हरिकीर्त्तनम्।**
**शुश्रुवुर्युयुजुस्तत्र द्वारिकावासिनः पुरा॥ १८७॥**

सोये हुए अर्जुन के केशों से हरिकीर्त्तन सुनकर द्वारिकावासी उसी कीर्तन में शामिल हो गये।

**अज्यन्ते विषयास्तेन तपसाङ्गेषु देहिनाम्।**
**स्तुयाम प्रणवात्ताङ्गै-र्वीर्यवत्प्रणवस्तुतिम्॥ १८८॥**

इसलिये तप से अङ्ग विषययुक्त हो जाते हैं। ऐसे प्रणवयुक्त अंगों से हम तेजस्वी प्रणव स्तुति करें।

**नन्वेवमर्थे ह्यङ्गानां कुतः स्थैर्यं विशेषणम्।**
**चलद्भिरपि शक्याऽङ्गैः स्तुतिः कर्तुं महात्मभिः॥ १८९॥**

पू. - अभी दिखाई गयी व्याख्या में 'स्थिरैः' यह विशेषण सार्थक नहीं दिखता। सचल अङ्गों से भी तो महात्मा स्तुति करते हैं।

**मैवं प्रणवपक्षे हि भवितव्यं स्थिरैर्जपे।**
**यतोऽचलत्वं चापेक्ष्येत्युक्तं सूत्रकृता स्वयम्॥ १९०॥**

उ. - प्रणव जप पक्ष में अचलत्वं चापेक्ष्य ऐसा सूत्रकार ने स्वयं कहा है।

**तदर्थभावनमपि जपे प्राह पतञ्जलिः।**
**स्थिरेष्वङ्गेषु तद्धि स्या-दासीनः संभवादिति॥ १९१॥**

महर्षि पतञ्जलि ने ओंकारार्थ भावना भी जप में बतायी है। स्थिर अंग

हो तभी वह संभव है। इसीलिये आसीनः संभवात् बताया।

**यद्वाऽर्थभावना कार्या स्थिरैरिति विशेषणात्।**
**अस्थिरैरपि शक्यत्वाज्जपमात्रे विवक्षिते॥१९२॥**

अथवा स्थिरैः इस विशेषण से ही अर्थभावना अर्थलभ्य है। केवल जप अर्थ होता तो अस्थिर अंगों से भी वह संभव था। स्थिरैः यह विशेषण व्यर्थ होता।

**हंसमन्त्रं यथा सर्वो जीवो जपति सर्वदा।**
**किन्त्वर्थभावना नैव सर्वदा क्रियते जनैः॥१९३॥**
**अत एव फलं चास्य लभ्यते नैव पामरैः।**
**विवक्षितार्थभावश्च स्थिरैरितिविशेषणात्॥१९४॥**

जैसे हंस मन्त्र सभी सर्वदा जपते हैं। अर्थभावना नहीं करते। अतः उसका फल प्राप्त नहीं होता। अतः स्थिरैः इस विशेषण से अर्थभावना भी विवक्षित है।

**जपन्ति ननु सर्वाङ्गैः सिद्धा एव न साधकाः।**
**न शासनीयाः सिद्धास्तु नैव ते प्रार्थयन्त्यपि॥१९५॥**

पू. - अंग-अंग से स्तुति सिद्ध ही कर सकते हैं, साधक नहीं। सिद्ध के लिये यह शासन नहीं। और न उनके लिये प्रार्थनीय ही कुछ है।

**सत्यं स्थिरत्वमङ्गानां सर्वाङ्गैः स्तुतिरेव च।**
**तेन देवहितं स्वायुर्व्याप्तिश्चात्रार्थ्यतेऽर्थिना॥१९६॥**

उ. - बात सत्य है। यहां अर्थी साधक ही प्रार्थना करता है-अङ्ग स्थिर हो सर्वाङ्ग से स्तुति हो उस से देवहित आयु को व्याप्त करूं।

**ननु नानाविधानेन वाक्यभेदस्तदा भवेत्।**
**मैवं विशिष्टमत्रैकं साधकेनार्थ्यते सता॥१९७॥**
**प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।**
**अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥१९८॥**

पू. - अङ्गस्थैर्य सर्वाङ्गस्तुति तथा देवहितायुव्याप्ति इन सबका विधान

होने पर वाक्यभेद होगा। नहीं। विशिष्ट एक का ही विधान है। विशिष्ट विधान में वाक्यभेद नहीं होता ऐसा भट्टाचार्य भी कहते हैं।

**वस्तुतः प्रार्थनायां न वाक्यभेदोऽस्ति दूषणम्।**
**प्रार्थ्यते ज्ञात एवार्थोऽज्ञातार्थज्ञापको विधिः॥१९९॥**

वस्तुतः प्रार्थना में वाक्यभेद दूषण नहीं है। ज्ञातार्थ की प्रार्थना होती है। विधि अज्ञातार्थ ज्ञापक है।

**अत एवोत्तमतिङ्ग यत्पदादेश्च मन्वते।**
**विधिशक्तिक्षयं लस्य मीमांसकमहाशयाः॥२००॥**

इसीलिये उत्तम पुरुष यत्पद आदि से लिङादि की विधि शक्ति का क्षय मीमांसक मानते हैं।

# तनूभिर्व्यशेम देवहितं यदायुः

**स्थितरैरङ्गैः कृताभ्यासैर्विहितस्तुतयो वयम्।**
**तनूभिर्व्याप्नुयामाऽऽयु - र्यद्धि देवहितं परम्॥२०१॥**

अभ्यासवश स्थिर अङ्गों से स्तुति करते हुए हम अपनी आयु को पूर्ण करे जो परम देवहित हो।

**तनूभिरिति निर्दिष्टं बहुत्वं किंनिबन्धनम्।**
**बाल्यादौ भवतस्तर्हि सार्थक्यं नाप्नुयात् स्तुतिः॥२०२॥**

उवटाचार्य के भाष्यानुसार चले तो बाल्यकाल में तनूभिर्व्यशेम का अर्थ क्या करेंगे? स्तुति बालक के लिये अर्थशून्य होगी।

**ब्रह्मचारी यतिश्चैवानधिकारी जपे भवेत्।**
**कुटुम्बनाशे वृद्धस्य पाठाभावाद् द्विदण्डता॥२०३॥**

ब्रह्मचारी संन्यासी आदि आपके मत में एतद् मन्त्र जप में अनाधिकारी होंगे। कुटुम्ब नाश हो गया एक ही वृद्ध रह गया तो वृद्धत्व का दण्ड और पाठानधिकार दण्ड ऐसे दो दण्ड भुगतने पडेंगे।

**व्यशेमेति बहुत्वोक्तेस्तन्वस्तेषां भवन्ति चेत्।**
**आयूंषीत्यपि वक्तव्यं भवेदायुर्बहुत्वतः॥२०४॥**

व्यशेम में कर्तृबहुत्व होने से शरीर बहुत्व मानो तो आयूंषि ऐसा बहुवचन कहना पडेगा। सबकी आयु अलग अलग है।

प्रत्येकपर्यवसितमायुरेकैकमेव चेत्।
एकैका तनुरप्येव प्रत्येकावसिता भवेत्॥२०५॥

व्यशेम यह प्रत्येक आयुपर्यवसित है तो तनु भी प्रत्येक पर्यवसित होगी।

अत्राहुर्जागरे स्वप्ने सुषुप्तौ च पृथक् पृथक्।
तन्वस्तिस्त्रः प्रतिव्यक्ति भवन्तीति बहुत्वगीः॥२०६॥

जाग्रत स्वप्न सुषुप्ति के तीन शरीरों को लेकर बहुत्व मान लो ऐसा एक पक्ष है।

प्रबोधे स्थूलपूजाद्यैः स्वप्ने तैर्वासनोद्भवैः।
सुषुप्तौ दृढसंस्कारै-रायुर्देवहितं भवेत्॥२०७॥

जाग्रत में स्थूल पूजादि से स्वप्न में वासनाजन्य पूजादि से तथा सुषुप्ति में पूजादि विषयक दृढ संस्कार से (जिससे सुषुप्त्युत्तर तुरत भगवत्स्मरणादि हो) आयु देवहित हो जायेगा।

सुप्तोत्थितस्य संस्फूर्तिर्भवेज्जागरणे ततः।
सम्यक् स्याद्देवसेवेति तच्च देवहितं मतम्॥२०८॥

दृढ संस्कार से जाग्रत में सम्यक् स्फुरण होगा। और देवसेवा होगी। अतः दृढ संस्कारयुक्त सौषुप्त शरीर भी देवहित ही होगा।

किं च स्वप्ने प्रतिनिशं भिद्यन्ते तनवस्ततः।
तावता बहुदेहत्वं सर्वेषां युज्यतेतराम्॥२०९॥
नैयायिकमते जाग्रत्तनवो बहवो मताः।
उपचित्यमचित्योर्हि भिद्यन्ते तनवो यतः॥२१०॥

स्वप्न में प्रति रात शरीर भेद होता है। अतः सौषुप्त शरीर न लेने पर भी बहुत्व होगा। नैयायिक लोग उपचयापचय से जाग्रत में भी शरीरभेद मानते हैं।

अथवोक्तं भगवता श्रीकृष्णेनार्जुनं प्रति।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते॥२११॥

अनेकजन्मसंसिद्ध इत्यप्येव जगौ हरिः।
तस्माद्बहुशरीरत्वं साधकानां भवेद् ध्रुवम्॥२१२॥
सर्वेष्वपि शरीरेषु यदायुः कर्मनिश्चितम्।
तच्च देवहितं कृत्वा व्याप्नुयामेति भण्यते॥२१३॥

अथवा - बहुत सारे जन्मों में किये साधनों से साधक मुझे प्राप्त होता है। अनेक जन्मों में संसिद्ध होता है, इत्यादि गीता में कहा। अतः साधकों की बहुशरीरता सुगम है। सभी शरीरों जो कर्म निर्मित है, में जो आयु है उसे देवहित विधया व्याप्त करें।

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वचला भक्तिरच्युतास्तु सदा त्वयि॥२१४॥
नारायणापराः सर्वे न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥२१५॥
तस्माद् बहुशरीराणि संभाव्यन्ते मुमुक्षताम्।
संभावनामात्रतोऽपि बहुत्वोक्तिर्हि युज्यते॥२१६॥

हजारों योनियों में भले जाऊं, पर सर्वत्र भक्ति हो। नारायण भक्त स्वर्ग अपवर्ग नरक किसीसे डरते नहीं इत्यादि पुराण वचनों से बहु शरीर सिद्ध है।

ननु ये जन्ममरणसंसारत्रस्तचेतसः।
नेच्छन्त्यन्यतनूर्ब्रूयुस्तनूभिरिति ते कथम्॥२१७॥

पू. - जो जन्ममरणभीत है, दूसरा शरीर नहीं चाहते वे बहुवचन से कैसे कहेंगे?

सत्यं न त्रासमात्रेण निरोद्धुं जन्म शक्यते।
प्रशान्तमनसां क्वापि नैवोद्वेगः प्रजायते॥२१८॥

उ. - त्रास मात्र से जन्म हो सकेगा नहीं। शान्त चित्तों को उद्वेग होता ही नहीं है।

तुल्यार्थदर्शिनः स्वर्गनरकादौ च ये बुधाः।
ते मुच्यन्ते न तु परे नित्यमुद्विग्नचेतसः॥२१९॥

स्वर्ग नरकादि में तुल्यदर्शी युक्त होते हैं न कि नित्य उद्विग्नचित्त।

श्रुत्वा जन्मत्रयादूर्ध्वं हरिदर्शनसंभवम्।
तपस्वी नारदात्तीव्र-मुद्विग्नो विजहौ तपः॥२२०॥
लक्षजन्मोत्तरं मोक्षं श्रुत्वान्यो मुमुदे भृशम्।
ननर्त मोक्ष्यसंज्ञासु निजनामप्रवेशतः॥२२१॥

नारदजी ने महातपस्वी को तीन जन्म के बाद मोक्ष बताया तो उद्विग्न होकर उसने तप ही छोड दिया। दूसरे तपस्वी ने लक्षजन्म बाद मुक्त होने की बात सुनकर नाचने लगा, चाहे करोड जन्म बाद सही, मुक्त होनेवालों की नामावली में मेरा नाम तो जुड गया।

नन्वस्मिन्नेव जनुषि मोक्ष्यामीति विचिन्वता।
नैव पठ्येत मन्त्रोऽयमित्तिचेत्तत्तु नैव सत्॥२२२॥

पू. - इसी जन्म में मुक्त होऊंगा ऐसा सत्य निश्चय होने पर यह मन्त्र पढा नहीं जायेगा। नहीं।

मोक्ष्याम्यत्रैव जनुषी-त्येतज्ज्योतिषविद्यया।
किं स जानाति किं वा स्वं वीक्ष्यैवाद्वैतदर्शनम्॥२२३॥

यह बताईये - इस जन्म में ही मुक्त हो जाऊंगा ऐसा ज्ञान ज्योतिष विद्या से उसको होता है या अपना अद्वैतदर्शन देख कर?

नाद्यो नित्ये नैव मोक्षे ज्योतिर्विद्या प्रवर्तते।
सा साध्यसाधनपदा भविष्यत् साध्यमेव यत्॥२२४॥

ज्योतिष से नहीं होगा। साध्यसाधनभावस्थल में वह चलता है। मोक्ष होगा। यह भविष्यत्त्व नित्य मोक्ष में नहीं घट सकता।

नान्त्योऽद्वैतप्रबोधे हि तद्दर्शी मुक्त एव सः।
मोक्ष्यामीति भविष्यद्धी-र्मिथ्या हन्त कथं विदः॥२२५॥

अपना अद्वैत प्रबोध देखकर यदि वह बोलता है कि इसी जन्म में मुक्त हो जाऊंगा। तो वह मिथ्या होगा। अद्वैतदर्शन हो गया तो वह मुक्त ही है। मुक्त होऊंगा यह कैसा?

प्रागभावप्रतिस्पर्धी भविष्यदिति भण्यते।
न कस्यापि प्रतिस्पर्धी मोक्षः किल निगद्यते॥ २२६॥

प्रागभावप्रतियोगी भविष्य होता है। मोक्ष किसी का प्रतियोगी नहीं है।

पूर्वाभ्यासवशादस्य बाधितस्यानुवृत्तितः।
मन्त्रपाठोऽस्तु किंवास्तु लोकसंग्रहहेतवे॥ २२७॥

पूर्वाभ्यास वश से या बाधितानुवृत्ति से मन्त्र पाठ वह कर ले या लोकसंग्रहार्थ ही मन्त्र पाठ कर ले इसमें क्या चर्चनीय है।

साधकानां कृते ह्येष मन्त्रः श्रुतिषु पठ्यते।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥ २२८॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
इतिजानन् पुमान् मन्त्रं पठतीममिति स्थितिः॥ २२९॥

साधकों के लिये ही श्रुतियों में यह मन्त्र पठित है। अनेक जन्मों में संसिद्ध होकर उसके बाद परम गति प्राप्त होती है। बहु जन्मों के बाद ही साक्षात्कार करके मुक्त हो सकते हैं ऐसा समझनेवाला यह मन्त्र पढता है यही वस्तुस्थिति है।

## व्यशेम देवहितं यदायुः

देवेभ्यो यत् खलु हितं तद्देवहितमुच्यते।
तदायुः स्याद्देवहितं पूज्यन्ते यत्र देवताः॥ २३०॥

देवताओं का हित वही आयु है जिसमें देवता पूजे जाते हैं।

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ २३१॥
देवानां हितकारि स्याद् यज्ञाद्यैः श्रुतिषूदितैः।
यदेवायुर्मनुष्याणां तदायुर्व्यश्नुवीमहि॥ २३२॥

गीता में यज्ञादि से देवता एवं मनुष्य दोनों का श्रेय बताया है। वही आयु देवहित है।

देवः प्रकाशरूपश्च स प्रकाशनकार्यपि।
स आत्मा तस्य च हितं मायावरणभञ्जनम्॥ २३३॥
तद् यस्मिन्नायुषि भवेत् तच्च देवहितं मतम्।
तादृगायुः व्याप्नुयामे-त्याशैषाचार्यशिष्ययोः॥ २३४॥

वह मायावरण भंजन जिस आयु में हो वह आयु भी देवहित है। ऐसी आयु को हम व्याप्त करे यह आशा आचार्य और शिष्य की है।

देवैर्हितं देवहितं देवस्थापितमात्मनः।
दधातेर्हिरिदंसूत्रं धारणे पोषणे डुधाञ्॥ २३५॥
धारितं पोषितं चायु-र्देवैर्देवहितं तु तत्।
कृतज्ञतावशाद्देवान् स्तुवन्तस्तान्दयाम्बुधीन्॥ २३६॥
आयुर्देवहितं तद्धि व्याप्नुयाम निजोन्नतेः।
एवं व्याख्याऽस्य मन्त्रस्य बहूनां हि महीयसाम्॥ २३७॥

देवहितं में देवैर्हितं देवहितं ऐसा तृतीय समास है-देवस्थापित अर्थ है। डुधाञ् धारणपोषणयोः इस धातु से 'त' प्रत्यय होने पर दधाते र्हिः इस सूत्र से धा धातु को हि आदेश होता है। सब देवधारित देवस्थापित देवपोषित जो आयु वह देवहित है ऐसा अर्थ निकलता है। देवपोषित आदि होने से देवता कृपा स्पष्ट है। अतएव कृतज्ञतावशात् आदरवशात् और निजोन्नतिकारणवशात् हम उन्हीं देवताओं की स्तुति करते हुए उस आयु को सफल बनायें। ऐसी व्याख्या बडे-बडे अनेक महान भाष्यकारों ने इस मन्त्र की की है।

हिकारसहितः पाठः संहितासु व्यशेमहि।
व्यशेमेति हिशून्यश्च पाठ आरण्यके स्थितः॥ २३८॥

स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः।
स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

भद्रं कर्णेभिरित्येतन्मन्त्रेण सह पठ्यते।
शान्त्यन्तः स्वस्ति न इति मन्त्रोऽयं सांप्रदायिकैः॥ २३९॥
क्रमभेदेन मन्त्रौ द्वावेतौ यजुषि संगतौ।
क्रमिकावपि साम्प्रयेतौ द्वित्वेनैव प्रदर्शितौ॥ २४०॥

स्वस्ति. न इन्द्रो इत्यादि मन्त्र भद्रं कर्णेभिः के साथ शान्तिपाठ में संप्रदायवेत्ता पढते है। यजुर्वेद में इन दोनों मन्त्रों को विपरीत क्रम से पढा है। सामवेद में यद्यपि इसी क्रम से पढा है। किन्तु दो मन्त्रों के रूप में।

न चात्रापि हि मन्त्रौ स्तां द्वावेवेति तु सांप्रतम्।
एकादश तथा चेत्स्युः शान्तयो न पुनर्दश॥ २४१॥

यहां भी दो ही मन्त्र मानेंगे तो एकादश शान्ति होंगी। न कि दस।

त्रिः शान्तिः सकृदेवान्ते पठ्यते तेत्तिरीयके।
एक एव ततः शान्तिमन्त्रोऽयमिति निश्चयः॥ २४२॥

त्रि शान्ति अन्त में एक ही बार पढी है। मन्त्र दो होते तो दो बार पढते।

वाक्यभेदाद् भवेन्मन्त्रद्वयमित्यप्यसांप्रतम्।
बहुवाक्येऽपि मन्त्रैक्य-मिषेत्वादिषु दृश्यते॥ २४३॥
भद्रंकर्णेभिरित्यत्र तिस्त्रः सन्ति क्रियाः पृथक्।
तथापि वैदिकैरेकमन्त्ररूपेण पठ्यते॥ २४४॥

वाक्यभेद से मन्त्रभेद मानना चाहिये ऐसा कहना भी उचित नहीं। इषेत्वोर्जेत्वा इत्यादि में वाक्य बहुत है। फिर भी मन्त्र संख्या एक ही मानी जाती है। भद्रं कर्णेभिः में तीन क्रियापद है। फिर भी वैदिक लोग एक मन्त्र के रूप में पढते है।

उच्छिन्नसंप्रदायत्वकल्पना त्वसती भवेत्।
प्रतिवाक्यं भाष्यकृद्भिस्तदव्याख्यानतः स्फुटा॥ २४५॥
सहनाविति मन्त्रे हि स्पष्टं वाक्यचतुष्टयम्।
तथापि सकृदेवान्ते शान्तेर्भाष्यमभाषि तैः॥ २४६॥
द्वाभ्यां हि शान्तिं कृत्वग्भ्यामुपदध्याद्बीष्टकाः।
इति शान्त्यैक्यमृगद्वैतं चाह बोधायनो मुनिः॥ २४७॥

दो ऋचांओं से शान्ति कर जल-इष्टका उपधान करें ऐसा बोधायन कल्पसूत्र में दो ऋचाओं की एक शान्ति बताया है। यहां भी दो ही मन्त्र मानेंगे तो एकादश शान्ति होगी। न कि दो। पृथक् पृथक् शान्ति

पढने का संप्रदाय बीच में टूट गया होगा ऐसी कल्पना भी असत्कल्पना है। सहनाववतु में चार वाक्य है। फिर भी एक ही शान्ति करके भाष्य किया।

दधात्विति तुरीयस्थमभिसंबध्यते त्रिषु।
इन्द्रो दधातु नः स्वस्तीत्येवं त्रिष्वपि योज्यताम्॥ २४८॥

स्वस्ति नो बृहस्पतिर्दधातु ऐसा चौथे पाद में आया हुआ क्रियापद पूर्व तीनों पादों के सम्बन्धित है। इन्द्रः स्वस्ति दधातु, पूषा स्वस्ति दधातु इत्यादि।

इन्द्रो नः स्वस्ति भवतु स्वस्तिरूपो भवत्विति।
व्याख्या न शोभना कस्मात् क्रियाध्याहारगौरवात्॥ २४९॥

इन्द्र हमारे लिये मंगलरूप या मंगलकारी हो ऐसी व्याख्या समुचित नहीं है। क्योंकि उसमें भवतु इस क्रिया का अध्याहार गौरव दोषग्रस्त है।

सत्युपायान्तरे नैव ह्यध्याहाराद्युपेयते।
अस्त्युपापान्तरं ह्यत्र दधातेरपकर्षणम्॥ २५०॥

उपायान्तर होने पर अध्याहारादि मान्य नहीं है। यहां दधातु का अपकर्षण उपायान्तर है।

स्वस्त्वित्यर्थोऽपि नो युक्तो व्यत्ययक्लेशसत्त्वतः।
तुर्यपादे च वैरूप्यं यथाश्रुतपरिग्रहात्॥ २५१॥

स्वस्ति का अस्तु ऐसा अर्थ भी ठीक नहीं। क्योकि इससे लोट् के स्थान में लट् का व्यत्यय मानना पडेगा। चतुर्थ पाद में वैरूप्य भी होगा। क्योंकि वहां क्रियापद होने से यथाश्रुत अर्थ ही करना पडेगा।

अन्ये त्वस्तीति सत्तार्थे विभक्तिप्रतिरूपकम्।
अव्ययं लिङ्गवचनविभक्तिष्वैकरूप्यतः॥ २५२॥

अन्य लोगों की व्याख्या है-अस्ति यह सत्ता अर्थ में विभक्ति प्रतिरूपक अव्यय है।

सुशब्दः शोभनार्थोऽयमविनाशित्वबोधकम्।
अशोभने यतो मृत्युरमृतं ह्येव शोभनम्॥ २५३॥

जातस्य हि ध्रुवो मृत्यु-र्गम्यतेऽजत्वमप्यतः।
अजत्वाद्वृद्धिविपरि - णामापक्षयवर्जितम्॥ २५४॥
त्रिकालाऽबाध्यसंज्ञातः स्वस्तीत्येतेन गम्यते।
परमं मङ्गलं तच्च तस्मान्मङ्गलवाच्यपि॥ २५५॥
दधात्विन्द्रो मङ्गलं तत् तदाविर्भावयत्वसौ।
आविर्भावणमेवेद - मपरिच्छिन्नधारणम्॥ २५६॥

'सु' का शोभन अर्थात् अविनाशी अर्थ है। क्योंकि मृत्यु ही अति अशोभन है, अमृत ही शोभन है। उत्पन्न कि मृत्यु निश्चित है अतः अजत्व भी शामिल होगा। तब वृद्धि विपरिणाम-अपक्षय वर्जित भी होगा। फलतः त्रिकाला बाध्यसत्ता ही सुसत्ता-स्वस्ति का अर्थ होगा। वही परम मङ्गल है अतः स्वस्ति मंगल बोधक भी है। इन्द्र उस मंगल को धारण करायें। अपरिच्छिन्न ही स्वस्ति हो सकता है उसका धारण करना आविर्भूत करना ही है क्योंकि अपरिच्छिन्न नित्य प्राप्त होने से उसका प्रापण आविर्भावन ही है।

दधातु स्थापयत्वेतदब्रूतां सायणोवटौ।
तत्स्थापनं तदचलस्थितिसम्पादनं मतम्॥ २५७॥
अस्थिरंतु भवेत् स्वस्ति मध्येमध्येभिभूतितः।
मा भूदभिभवस्तस्येत्युक्तेऽर्थे पर्यवस्यति॥ २५८॥

दधातु का अर्थ सायणाचार्य तथा उबटाचार्य ने स्थापयतु किया है। अचल स्थिति संपादन हि स्थापन है। चलता-अस्थिरता आनन्द सत्ता में बीच बीच में अभिभव होने से होता है न कि चलने से या अभाव हो जाने से। अतः अनभिभूत स्थिति की प्रार्थना होने से पूर्वोक्त अर्थ में ही पर्यवसान है।

अपरिच्छिन्नसत्तैव परमं मङ्गलं भवेत्।
ततः स्वस्तीतिशब्दोऽयमुक्तो मङ्गलवाच्यपि॥ २५९॥

अपरिच्छिन्न सत्ता ही परम मङ्गल होती है अतः स्वस्ति का मङ्गल अर्थ भी होता है।

मङ्गलं भगवान विष्णुर्मङ्गलं गरुडध्वजः।
मङ्गलं पुण्डकरीकाक्षो मङ्गलायतनो हरिः॥ २६०॥
वेवष्टीति भवेद् विष्णुर्व्यापको व्याप्नुवन् जगत्।
छन्दोमयेन गरुडे-नेति भागवतेक्षणात्॥ २६१॥
वेद एव भवेत्तस्य ध्वजवत् परिचायकः।
हृत्पुण्डरीके प्रत्यक्षात् पुण्डरीकाक्ष उच्यते॥ २६२॥
हरिः पापहरत्वेन मङ्गलात्मा स गीयते।
इन्द्रो मङ्गलरूपं तं हृदि स्थापयतु प्रभुः॥ २६३॥

स्वस्ति-मङ्गल विष्णु-व्यापक सत है। भागवत में छन्दोमयेन गरुडेन बताया है। छन्द माने वेद ध्वज के समान परिचायक है। अतः गरुड ध्वज मंगल है हृत्पुण्डरीक में प्रत्यक्ष होता है अतः पुण्डरीकाक्ष वह मंगल है। पापहारी होने से मंगल है। उस स्वस्तिरूप मंगल को इन्द्र मेरे हृदय में स्थापित करे।

मङ्गलं भगवान् शम्भु-र्मङ्गलं वृषभध्वजः।
मङ्गलं पार्वतीनाथो मङ्गलायतनो हरः॥ २६४॥
शं स भावयतीत्यस्मात शम्भुर्भवति मङ्गलम्।
धर्मो हि वृषभः प्रोक्तः स मङ्गलनियामकः॥ २६५॥
तस्मान्मङ्गलरूपोऽसौ शंकरो वृषकेतनः।
पर्वतेःपूरणार्थात् स्यादतच् पूर्णस्य खल्वियम्॥ २६६॥
शक्तिस्तन्नाथरूपत्वान्मङ्गलं पार्वतीपतिः।
मङ्गलायतनः सोऽयं शिवशब्देन भण्यते॥ २६७॥
हरो हरति पापानि मङ्गलैकावशेषणः।
इन्द्रस्तं मङ्गलात्मानं हृदि स्थापयतु प्रभुः॥ २६८॥

शंभु सर्वकल्याणकारी होने से स्वस्ति-मंगल है। वृषभ का भागवत में धर्मरूप बताया है। धर्म ही ध्वजवत् परमात्मापरिचायक-दर्शक है। अतः वृषभध्वज मंगल है। 'पर्वपूरणे' 'भृसृदृशि॰' से अतच्। पूर्ण सम्बन्धी शक्ति पार्वती का नाथ होने से मंगल है। मंगल का तो घर ही है।

इसीलिये मंगलार्थक शिव शब्द उनका नाम ही है पापहारी भी है। उस स्वस्ति मंगल हर को इन्द्र हमारे हृदय में स्थापित करे।

**नन्वव्ययं स्वस्तिपदं कथं नामाच्युतेशयोः।**
**स्वरव्ययं न किं नाम स्वर्गस्यैवं भवत्विदम्॥ २६९॥**

स्वस्तिपद अव्यय है। यह विष्णु और शिव का नाम कैसे? स्वर अव्यय है स्वर्ग का वह नाम नहीं है क्या?

**वस्तुतो विष्णुशिवयोर्मङ्गलत्वं विधीयते।**
**मङ्गलस्थापनोक्तौ चा-ऽऽयातौ विष्णुशिवाविति॥ २७०॥**

वस्तुतः मङ्गलं भगवान इत्यादि में विष्णु और शिव में मंगलत्व का विधान है। फलतः मंगल स्थापन कथन से विष्णु शिव स्थापन अर्थ आता है इतना ही कहना है।

**स्वस्तीति मङ्गलाशीर्वाक् पापनिर्णेजनादिषु।**
**भागुरिर्व्याजहारान्ये क्षेमपुण्यादिषूचिरे॥ २७१॥**

स्वस्ति का मंगल आशीर्वाद एवं पाप का धोना आदि अर्थ है ऐसा भामुरि आचार्य कहते है। क्षेम एवं पुण्य आदि अर्थ है ऐसा अन्य आचार्य कहते हैं।

**मङ्गलं नो दधात्विन्द्रः पापनिर्णेजनं तथा।**
**स्वस्तीति शब्द एवाशीर्वचनं तद्दधातु नः॥ २७२॥**
**स्वस्तीत्यस्मान् प्रतीन्द्रश्चेदाशीर्वाचं दधीत सः।**
**स्यात्सर्वकार्यसिद्धिर्न इति वेदविदां मतम्॥ २७३॥**
**एवं पुण्यं दधात्विन्द्र इत्यप्यर्थ इहेक्ष्यताम्।**
**एषैव प्रार्थना पुण्यकारणात्मतयेष्यताम्॥ २७४॥**

भागुरि एवं अन्यों का वचन मिलाकर ये अर्थ होंगे-इन्द्र हमारे पापों शुद्धि करें। स्वस्ति यह शब्द हमारे प्रति आशीर्वचन के रूप में प्रयुक्त करें जिससे हमारा सर्व कार्य सिद्धि हो। इन्द्र हमारा पुण्य सम्पादन करें। बिना कर्म किये कैसा पुण्य? यही प्रार्थना पुण्यकरण हो ऐसा तात्पर्य लगायें।

एतेनाकारिचेत् पुण्यं कर्मैषा प्रार्थना वृथा।
न चेत् कृतं प्रार्थनैषा वृथैवेति समाहितम्॥ २७५॥
लोकेऽपि प्रार्थनामात्रात् प्रार्थितं ददते बुधाः।
तत्प्राप्तौ प्रार्थना हेतुस्तद्वदत्रापि बुध्यताम्॥ २७६॥

इससे इस शंका का समाधान हो जाता है कि पुण्यकर्म यदि किया तो प्रार्थना किये बिना भी पुण्य कर्मादृष्ट हो जायेगा। यदि पुण्यकर्म नहीं किया तो प्रार्थना करने से पुण्यकर्मादृष्ट कैसे मिलेगा। लोक में याचक पैसा आदि मांगता है तो मांगी चीज दाता देता है। न मांगे तो नहीं देता है। अतः मांगना इष्ट प्राप्ति के प्रति कारण हुआ। वहां यह शंका नहीं की जा सकती कि कौनसी नौकरी करने से उसे इष्ट धनादि मिला।

अस्यतिः क्षेपणे दीप्ता-वसतिश्च स्मृतौ ततः।
क्तिज्वा तिर्वाऽव्ययत्वं तु भवेच्चादिषु पाठतः॥ २७७॥
एनसां तमसां वापि क्षेपणं विदधात्वसौ।
ज्ञानदीप्तिं च विदधात्वित्यप्यर्थोऽत्र गृह्यताम्॥ २७८॥

पापों का या अज्ञानों का वह निराकरण करे। ज्ञानदीप्ति करे। असक्षेपणे अस दीप्तौ (भ्वादिः) क्तिच् या ति प्रत्यय। चादिपठित होने से अव्यय है।

## इन्द्रः

परमैश्वर्यवानिन्द्रो बलाधिष्ठातृदेवता।
न स्थौल्यं बलहेतुस्तु तेज एव तथोच्यते॥ २७९॥

'इदि परमैश्वेर्य' धातु से निष्पन्न होने से इन्द्र का परमैश्वर्यवान् अर्थ है। वहां बलाधिष्ठातृ देवता है। बल हेतु स्थूलता नहीं। तेजस्विता है।

क्षुद्राङ्कुशवशो हस्ती दभ्रदीपहतं तमः।
ह्रस्ववज्रहतः शैल-स्तेज एव बलं ततः॥ २८०॥

छोटे अंकुश से हाथी वश हो जाता है। अल्प दीप से भारी तम नष्ट होता है। हड्डी से बने वज्र से पर्वत को तोडा। अतः तेज ही बल है-नीति श्लोक है:-

हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो।
वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रः पविः॥
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमः।
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः॥
सत्वेन वर्धते तेजः सत्त्वेनैवैधते बलम्।
सत्त्वेन बलवानिन्द्रः स हि सत्त्वगुणाश्रयः॥ २८१॥

सत्त्वगुण से तेज बढता है। बल बढता है। सत्त्व से इन्द्र बलवान हुआ। वह सत्त्वगुणपूर्ण है। गीताः-

आयुःसत्त्वबलारोग्य-सुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥ २८२॥
विधित्सितं सात्त्विकत्वमाहारेषु न भोक्तृषु।
आहारयज्ञप्रभृतौ त्रैविध्यप्रक्रमादिति॥ २८३॥

गीता में आयु सत्त्व बल आरोग्यवर्धकरूप से सात्त्विकाहार वर्णन किया है। वहां आहारादि में सात्त्विकादि विवक्षित है। न कि आहार करनेवालों में, क्योंकि यज्ञ तप आदि के साथ आहार का उपक्रम किया है-आहारस्त्वपि सर्वस्य इत्यादि।

सत्वे समेधमाने हि देवतास्य प्रसीदति।
सुसत्त्वं साधयत्वेष इन्द्रो मे परमेश्वरः॥ २८४॥

सत्त्वगुण के बढने पर ही व्यक्ति पर देवता प्रसन्न होते हैं। परम ऐश्वर्यवान इन्द्र सुसत्त्व-स्वस्ति संपादन करे।

ननु सत्त्वं गुणो ह्येष न सद्भावोऽस्तिशब्दितः।
सत्यं सतोभाव एव सत्त्वं तेनार्थ संगतिः॥ २८५॥

कहां का कहां जोड रहे हो? सत्त्व तो सत्त्वगुण हुआ। स्वस्ति में अस्तित्व उक्त है।

षदेः क्विपि भवेत् सत्तद्-भावः सत्त्वगुणस्तु चेत्।
अस्तेः शतरि तद्भावे कः प्रद्वेषस्तवोच्यताम्॥ २८६॥

षद्‌ धातु से क्विप् और त्व प्रत्यय से सत्त्वगुण होगा। अस धातु से

शतृ और क्विप करने में आप की नाराजगी क्यों है?

**सदेर्विशरणाद्यर्थः कथं सत्त्वगुणे युयात्।**
**कथं वा न युयाद्दीर्घजीवित्वं स्वस्तितादिके॥२८७॥**

सद् धातु का विशरणादि अर्थ है। सीदन्ति मम गात्राणि आदि प्रयोग है। ऐसा आयु बलारोग्यवर्धक कैसे? यदि उसे सिद्ध कर सकते हैं तो सुअस्तित्व-शोभन जीवन भी आयुरादिवर्धक क्यों नहीं होगा? अतः शब्दार्थ कलह वृथा है।

## वृद्धश्रवाः

**कथं स्वस्ति दधात्विन्द्रः स हि वृद्धश्रवा यतः।**
**श्रवस्तु धनमत्र स्यात् पठितं धननामसु॥२८८॥**

इन्द्र कैसे स्वस्ति धारण-स्थापन करेगा? इसका उत्तर है-वृद्धश्रवाः। श्रव माने धन।

**श्रुधात्वर्थानुगमतः श्रवणोत्थं धनं मतम्।**
**ब्रह्मविद्याप्रकरणे तद्विशेषेण संगतम्॥२८९॥**
**विद्याधनं सर्वधन-प्रधानमिति नैतिकाः।**
**अध्यात्मविद्या विद्यानां सर्वश्रेष्ठधनं तु सा॥२९०॥**

श्रव में श्रु धातु है उसका अर्थ जोडते हैं श्रवणोत्पन्न धन श्रवस का अर्थ होगा। ब्रह्मविद्या प्रकरण में ब्रह्मविद्यारूपी धन अर्थ होगा। ('विद्याधनं सर्वधन प्रधानं' 'अध्यात्मविद्या विद्यानां' इन दोनों वाक्यों को मिलाने पर वही सही सर्व श्रेष्ठ धनश्रव होगा।)

**सुवर्णादिर्ननु धन-मुपभोगस्य साधनम्।**
**मुख्यं प्रसिद्धं लोके च विद्या कस्माद्धनं भवेत्॥२९१॥**

सुवर्णादि उपभोग्य साधन लोक में धनरूप से प्रसिद्ध है। विद्या कैसे धन है?

**ब्रह्म तेऽहं ब्रवाणीति दृप्तबालाकिरब्रवीत्।**
**अजातशत्रुराहाऽस्यां सहस्रं वाच्यहं ददे॥२९२॥**

उत्तमात् श्रुतिसिद्धान्तान् शृण्वंश्च मिथिलेश्वरः।
आह सोऽहं भगवते सहस्रं हेम संददे॥२९३॥
अत ऊर्ध्वं विमोक्षाय ब्रूहीत्यपि वदत्यसौ।
ततः सामान्यविद्याया मूल्यं तदिति गम्यते॥२९४॥
अन्तेऽब्रवीद्भगवते विदेहान् प्रददाम्यहम्।
मां चापि सह दास्यायेत्यमूल्यं सूचयन् धनम्॥२९५॥

बृदहारण्यक में दृप्तबालाकि ने कहा 'मैं आप को ब्रह्म सुनाता हूं' इस पर अजातशत्रु ने कहा इतने वचन के लिये मैं आपको सहस्र मुद्रा देता हूं। उत्तम श्रुति सिद्धान्तों को सुनते हुए प्रत्येक के पीछे राजा जनक ने याज्ञवल्क्य को कहा-इसके लिये मैं आपको हजार सुवर्ण मुद्रा देता हूं। फिर कहा अब मोक्ष के लिये बताईये। इससे सामान्य विद्या का ही मूल्य सहस्र-सहस्र है ऐसा अर्थ निकलता है। अन्त में पूर्ण ब्रह्म विद्या कही तो राजाने कहा-पूरा विदेह राज्य आपको देता हूं और अपने आप को सेवा के लिये समर्पित करता हूं।

इन्धमेव परोक्षेण त्विन्द्रमाचक्षते बुधाः।
इन्धस्य खलु सर्वस्वं ज्ञानदीप्तिर्न संशयः॥२९६॥

इन्ध को ही इन्द्र कहते हैं। ञिइन्धी दीप्तौ। इसका सर्वस्व ज्ञान दीप्ति है।

देवेन्द्रार्थत्वपक्षेऽपि विज्ञानधन एव सः।
प्राह प्रतर्दनं प्राणः प्रज्ञात्मास्तीत्यसौ पुरा॥२९७॥
प्रजापतौ वर्षशतं ब्रह्मचर्यमुवास सः।
अवाप ब्रह्मविद्यां च तेन ज्ञानधनश्च सः॥२९८॥

इन्द्र का देवेन्द्र अर्थ हो तो भी वह ज्ञान था। प्रतर्दन को प्राणोस्मि प्राज्ञात्मा इत्यादि उपदेश इन्द्र ने दिया था। सौ वर्ष ब्रह्मचारी रहकर प्रजापति से ब्रह्मविद्या प्राप्त की थी। इसलिये भी ज्ञानधनत्व सिद्ध है।

श्रवसश्चेद् यशोऽर्थत्वमेतेनैव समर्थ्यते।
लोके प्रसिद्धिमापेन्द्रः सुप्रसिद्धयशोयुतः॥२९९॥

प्रजापतौ ब्रह्मचर्यमुवासैकशतं हवै।
वर्षाणि मघवेत्याहुरितिच्छान्दोग्यवाक्यतः॥ ३००॥
ह शब्देन प्रसिद्धत्वं संप्रदर्शयति श्रुतिः।
आहुर्लोका इति च गीः सर्वलोक प्रसिद्धिताम्॥ ३०१॥

श्रवस् का यश अर्थ पक्ष का भी इसीसे समर्थन होता है। इन्द्र ने लोक में प्रसिद्धि पायी एकसौ एक वर्ष प्रजापति के पास ब्रह्मचर्य वास किया ऐसी जनश्रुति छान्दोग्य में बतायी है। वहां 'ह' शब्द से ही प्रसिद्धि बतायी। आहुः बहुवचन से सर्व लोक प्रसिद्धि कही। यही तो यश है।

## स्वस्ति नः पूषा

वृद्धश्रवा इति पदे श्रवो नाम धनं भवेत्।
धनं च ज्ञानलक्ष्मैव वेदान्तानां प्रसङ्गतः॥ ३०२॥
तथापि श्रवणोत्थं हि ज्ञानमत्रोपतिष्ठते।
यतः श्रुधातुनिष्पन्नः शब्दोऽयं श्रव इत्यदः॥ ३०३॥
अथ द्वितीयपादेन पूषा संप्रार्थ्यते महान्।
पोषणादुच्यते पूषा श्रुतार्थपरिपोषणः॥ ३०४॥

वृद्धश्रवा में श्रव का धन अर्थ बताया वह भी ज्ञानात्मक धन। क्योंकि वेदान्त विद्यार्थी पढ रहा है। किन्तु श्रु धातु निष्पन्न होने से श्रवणजन्य ज्ञान का ही लाभ होता है। द्वितीय पाद में पूषा की प्रार्थना है। श्रुत अर्थ पोषणकारी यहां पूषा का अर्थ है।

पूषन्नेकर्ष इत्यत्र रश्मिव्यूहनमीरितम्।
कल्याणतमरूपस्य दर्शनायाऽस्य साधकः॥ ३०५॥
नामरूपात्मकं सर्वं रश्मिरूपं परात्मनः।
अस्तिभातिप्रियं तस्य कल्याणतममेव च॥ ३०६॥
नामरूपे विगमय बन्धनं यत्तदीक्षितुः।
सच्चिदानन्दरूपं च वीक्षमाणस्य मोक्षणम्॥ ३०७॥

स एव कुरुते तत्र प्रार्थितं प्रेरणं प्रभुः।
तदेवाह च गायत्र्यां धियो यो नः प्रचोदयात्॥ ३०८॥

'पूषन्नेकर्षे' इस मन्त्र में कल्याणतमरूप दर्शनार्थ रश्मिविगमन बताया। नामरूप परमात्मा का रश्मिरूप है। अस्ति भाति प्रिय कल्याणतम रूप है। नामरूप को हटाओ जो उसे देखनेवालों के लिये बन्धन है। सच्चिदानन्दरूप मोक्षकारण है। वही प्रभु सूर्य प्रार्थना करने पर तदर्थ प्रेरित करता है यही गायत्री में 'प्रचोदयात्' से बताया।

मननात् संततकृताद् विवेकज्ञानमुद्भवेत्।
नामरूपेमृषा भाता-मस्तिभात्योः पृथक्कृते॥ ३०९॥
अद्वैतस्य श्रुतार्थस्य तदेव किल पोषणम्।
ते सती पश्यतां क्वेवा-ऽद्वैतसाम्राज्यधुर्यता॥ ३१०॥
पूषानुग्रहलभ्यं तत् पोषणं श्रुतसद्धियः।
पोषणं पुष्टिरिति च प्राहुर्भागवता बुधाः॥ ३११॥
पुष्टिं चानुग्रहं कार्ये कारणस्योपचारतः।
मननादेव भवति श्रुतार्थपरिपोषणम्॥ ३१२॥
तत्र चानुग्रहः पूष्ण आप्नोति सहकारिताम्।
द्वारत्वं वा ततश्चेयं प्रार्थना पोषणार्थिनः॥ ३१३॥

निरन्तर मनन से अस्तिभाति का और नामरूप का विवेक ज्ञान होता है। अस्ति पृथक् हुआ कि नामरूप मृषा दिखने लगते हैं। यही श्रुत अद्वैत का पोषण है। नामरूप जब तक सत् दिखते है तब तक अद्वैत का बोलबाला नहीं हो सकता। यह पोषण पूषदेवानुग्रह से प्राप्य है। पोषण को भागवतलोग पुष्टि कहते हैं। उसीं को अनुग्रह कहते हैं। अनुग्रहजन्य होने से कार्य में कारणोपचार है। मनन से श्रुतिपोषण होता है। उसमें पूषा का अनुग्रह सहकारिकारण या द्वारकारण होगा। अनुग्रहार्थ स्वस्ति नः पूषा यह प्रार्थना है।

मृत्वा समभवत् प्रेतो धुन्धुकारी महाखलः।
गोकर्णः श्रवयामास तस्य भागवतं किल॥ ३१४॥

सप्तग्रन्थियंयुतं वंशं प्रेतः श्रोतुमशिश्रियत्।
सप्ताहश्रवणात्तस्य निर्भिन्नं ग्रन्थिसप्तकम्॥ ३१५॥
यदा सर्वे प्रभिद्यन्ते ग्रन्थयो हृदयस्य ये।
अथ मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्मसमश्नुते॥ ३१६॥
कामः क्रोधश्च लोभश्च मोहश्च मद एव च।
दम्भोऽहंकार एवापि ग्रन्थयः सप्त कीर्ति ताः॥ ३१७॥
अहं ममेति वा स्थूल-सूक्ष्म-बीज-तनूषु षट्।
परिच्छिन्नोऽहमिति च ग्रन्थीनां वास्तु सप्तकम्॥ ३१८॥

खल धुंधुकारी मरकर प्रेत बना। गोकर्ण ने उसे भागवत सुनाया। सप्तग्रन्थिवाले बांस पर वह सुनने बैठा। सात दिन सुनने से उसकी सात ग्रन्थियां टूटी। अध्यात्म में हृदय ग्रन्थि समझ लो जिनके टूटने से मर्त्य अमृत होता है। कामः क्रोधादि सात ग्रन्थियां हैं। या तीन शरीरों में अहं मम ऐसा छः और मैं अल्प हूं ऐसा सातवां समझो।

श्रवणादागमत्तस्य विमानं धुन्धुकारिणः।
विमानमिति विज्ञानं विविक्तविषयं हि यत्॥ ३१९॥
सूर्यप्रेरणया चेदं सर्वं हि समपद्यत।
तस्यैवानुग्रहान्नूनं विमानमपि मन्महे॥ ३२०॥

सप्ताह श्रवण से धुंधुकारी को विमान आया। विमान-विज्ञान-विविक्त ज्ञान। सूर्य प्रेरणा से ही यह सब हुआ था। सूर्य के अनुग्रह से सब हुआ ऐसा हम मानते हैं, कथा भी है।

अत्रैव बहवः सन्ति श्रोतारो निर्मला मम।
कस्मान्नायन् विमानानीत्यपृच्छद् गोश्रवास्तदा॥ ३२१॥

गोकर्ण ने पूछा सब श्रोताओं के लिये अलग विमान क्यों नहीं आये।

श्रवणं तु कृतं सर्वैर्न तथा मननं कृतम्।
फलभेदस्ततो जात इति वैमानिका जगुः॥ ३२२॥

वैमानिकों ने कहा-सुना सब ने, पर मनन नहीं किया। इसलिये फल भेद हो गया।

अदृढं हि हतं ज्ञानं प्रमादेन हतं श्रुतम्।
पुष्टं ज्ञानं तु भवति मोक्षदं मननादियुक्॥३२३॥

अदृढ ज्ञान नष्ट होता है। प्रमाद से श्रुत भी नष्ट होता है। मननादि युक्त दृढ ज्ञान ही साक्षात्कार कारक और मोक्षदायी होता है।

तत्रासंभावना ज्ञानं श्रुतं शिथिलयेद् बलात्।
विपरीता भावना च कुर्यान्निर्वीर्यमेव च॥३२४॥

असंभावना श्रुतादि ज्ञान को शिथिल बनाती है। विपरीत भावना निर्वीर्य बनाती है।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय इत्युक्तं तेन वेदिभिः॥३२५॥
बहुधा श्रवणं कार्यं बोधतद्दार्ढ्ययोः कृते।
श्रुतिवाक्येभ्य इति हि बहुत्वेनोदितं ततः॥३२६॥
न स्वाध्यायात्प्रवचनात् प्रमाद्यमिति च श्रुतिः।
स्वाध्यायावश्यकार्यत्वं प्रवक्तुरपि भाषते॥३२७॥

श्रुतिवाक्यों से श्रवण करो, युक्तियों से मनन करो, सतत ध्यान करो इस स्मृति में श्रुतिवाक्येभ्य इस बहुवचन बोध एवं उसकी दृढता के लिये बहुत श्रवण करने बताया। स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यं यह केवल प्रवक्ता के लिये नहीं कहा।

श्रोतव्यमितरस्माद्वा पठितव्यं स्वयं हि वा।
मुहुर्ग्रहणकर्तव्यभावस्तत्रोच्यते श्रुतेः॥३२८॥

दूसरे से सुनो या स्वयमेव पढो, ग्रहण करो बार-बार।

श्रवणावर्तनं चैव दार्ढ्यकारणमिष्यते।
विज्ञापयतु मा भूय एवेति श्रुतिदर्शनात्॥३२९॥

भूय एव मा भगवान विज्ञापयतु-ऐसी श्रुति भी लिंगविधया समर्थक है।

यद्यप्यल्पश्रवणतः प्रबुध्यन्त्युत्तमा जनाः।
तद्दौर्लभ्यात्तु कथितं श्रुतिवाक्येभ्य इत्यदः॥३३०॥

उत्तमाधिकारी अल्प श्रवण से भी कृतार्थ होता है। किन्तु ऐसा अधिकारी ही दुर्लभ है।

नित्यं नवनवार्थस्य स्फुरणं जायते मम।
गीतावर्तनतो हीति महात्मापि किलाब्रवीत्॥ ३३१॥

गीता के आवर्तन से नया नया अर्थ स्फुरण मुझे होता है ऐसा महात्माजी (गांधी) ने भी कहा।

नित्यस्वाध्यायतश्चैव तथा प्रवचनादपि।
सुसूक्ष्मार्थप्रकाशः स्याद् ज्ञानदार्ढ्यं च जायते॥ ३३२॥

नित्य स्वाध्याय और प्रवचन से अति सूक्ष्म बात प्रकाशित होगी और ज्ञान दृढ होगा।

न पाठमात्र आवृत्तिः सोपपत्तिविचारणा।
नाना च सा तथा चोक्तं मन्तव्यश्चोपपत्तिभिः॥ ३३३॥
आवर्तयामास नव-कृत्वस्तत्त्वमसीति हि।
प्रत्यावृत्ति तु भिन्नैव युक्तिस्तत्र प्रदर्शिता॥ ३३४॥

आवृत्ति पाठमात्र नहीं उपपत्ति भी नाना चाहिये। यही उपपत्तिभिः इस बहुवचन से कहा। तत्त्वमसि का नौ बार आवर्तन किया किन्तु अलग अलग रखी युक्ति।

तस्मान्निर्विद्य पाण्डित्यं तिष्ठासेद् बाल्यतः सुधीः।
बलस्य भावो दार्ढ्यं तद् मननादिसमुद्भवम्॥ ३३५॥

श्रवण कर बाल्य से रहो। बल भाव-बाल्य दाढ्यार्थ है जो मनन जन्य है।

पोषणं पुष्टिरित्येतद् तद्बाल्यं मननोद्भवम्।
कार्यकारणतापन्नं पूषा संपादयेदिति॥ ३३६॥

पोषण पुष्टि बाल्य एक ही है, मनन से होता है इनकी पूषा संपन्न करता है।

श्रद्दधानस्य जिज्ञासोर्गुरूद्दिष्टोपपत्तिभिः।
बोधः स्यादनपेक्ष्यान्यद् श्वेतकेतोर्यथैव हि॥ ३३७॥

अतएव विशेषेण मध्ये उद्दालको जगौ।
श्रद्धत्स्व सोम्य सुश्रद्धा सत्यबोधकरी यतः॥ ३३८॥
श्रद्धांतिशययुक्तस्य महामेधाविनः पुनः।
न निदिध्यासनस्यापि स्यादपेक्षेति गम्यते॥ ३३९॥
अत एवोपदेशोर्ध्व-मनुक्त्वा साधनान्तरम्।
श्रुतिराचष्ट तद्धास्य विजज्ञावित्यनन्तरम्॥ ३४०॥

श्रद्धा हो तो गुरूक्त उपपत्ति मात्र से बोध हो जायेगा। इसीलिये बीच में उद्दालक ने सोम्य! श्रद्धा करो। यहां तक कि निदिध्यासन की भी जरूरत नहीं पडेगी। इसीलिये उद्दालक के उपदेश के तुरंत बाद श्वेतकेतु को विज्ञान (साक्षात्कार) हुआ बताया।

श्रद्धातिशयराहित्ये उपदेशादनन्तरम्।
कर्तव्यं मननं चैव निदिध्यासनमेव च॥ ३४१॥
अत एव च मैत्रेयीं याज्ञवल्क्यो जगावृषिः।
व्याचक्षाणस्य मे सम्यङ् निदिध्यासस्व सुप्रिये॥ ३४२॥
सामान्यानां पुनर्ग्राह्यं मननं श्रवणोत्तरम्।
भवेत्ततो ज्ञानदार्ढ्यं पूष्ण एवानुकम्पया॥ ३४३॥
निदिध्यासनमप्येवं कर्तव्यं नैव संशयः।
सामान्यानां विशिष्टानां नापेक्षेति पुरोदितम्॥ ३४४॥

अतिशय श्रद्धा न हो तो विशेष मनन और निदिध्यासन कर्तव्य है। इसीलिये याज्ञवल्क्य ने मैत्रैयी को व्याचक्षणस्य में निदिध्यासस्व कहा। सामान्य लोगों के लिये श्रवणोत्तर मनन करना ही है। ज्ञानदार्ढ्य मननकारी को पूषा कर देगा। तथा निदिध्यासन भी सामान्य महात्मा को करना है। विशिष्टों को उसकी अपेक्षा न होगी यह पहले कहा।

परे किलोपसंहार-न्यायात् सर्वस्य संजगुः।
निदिध्यासनमप्येव कर्तव्यं मोक्षमिच्छतः॥ ३४५॥
तद्धास्य च निदिध्यास्य विजज्ञाविति योज्यताम्।
श्वेतकेतोरिति जगुः श्रुतिव्याख्यानकोविदाः॥ ३४६॥

श्रुतिव्याख्यानकुशल दूसरे मनीषी कहते है-उपसंहार न्याय से निदिध्यासन अवश्य कर्तव्य है। छान्दोग्य में तद्धास्य निदिध्यास्य विजज्ञौ ऐसा जोडकर व्याख्या करो।

श्रद्धासत्त्वेऽपि मननं न दोषयोपकल्पते।
पुष्येज्ज्ञानं ततो युक्तं कर्तुं मननमात्मनः॥ ३४७॥

श्रद्धा हो तो भी मनन में हानि क्या? ज्ञानपोषण गुण ही है अतः करने योग्य ही है।

जगदेतन्मृषा सर्वं दृश्यत्वाच्छुक्तिरूप्यवत्।
न हि दृग्दृश्यसम्बन्धो घटते हि कथंचन॥ ३४८॥
अनवस्थैव सम्बन्धे सम्बन्धान्तरमस्ति चेत्।
नो चेत् सर्वत्र सर्वस्य भवेत् सम्बद्धधीः प्रमा॥ ३४९॥

यह जगत दृश्य होने से शुक्तिरूप्यवत् मृषा है। क्योंकि दृग् दृश्य सम्बन्ध नहीं बनता। ज्ञान अंदर है, घट बाहर है, क्या उनका सम्बन्ध? अतः शुक्ति रजत के समान कल्पनामात्र है। घटरूप आंख में आया उससे ज्ञान का सम्बन्ध हुआ कहो तो कौनसा सम्बन्ध हुआ? यदि संयोग हुआ तो उस संयोग का ज्ञान के साथ और घटरूप के साथ सम्बन्ध दो मानने होंगे। वे कौन से सम्बन्ध हैं? उन दोनों सम्बन्धों के संयोग के साथ चार और मानो तो अनवस्था ही होगी। बिना सम्बन्ध सम्बद्धधी हो तो सर्वत्र सर्व सम्बद्धधी होगी।

सामीप्यमेव सम्बन्ध इति चेत्तच्च दुर्भणम्।
समीपदेशसम्बन्धः सामीप्यं तुल्यमेव तत्॥ ३५०॥

अति सामीप्य ही सम्बन्ध है अलग चीज नहीं, कहो तो भी कोई फरक नहीं। समीप देश सम्बन्ध ही सामीप्य है। सम्बन्ध का झमेला फिर उसमें आ गया और अनवस्था ही होगी।

शैशवे वृत्तमखिलं स्वप्नवत्स्मर्यतेऽधुना।
अद्यगं स्वप्नवच्चैव याते काले स्मरिष्यते॥ ३५१॥

अधुनैव कुतो बन्धो स्वप्नवन्नैव वीक्षताम्।
अस्वप्नतुल्यं न स्वप्न तुल्यं भवितुमर्हति॥ ३५२॥

बचपन में जो भी हुआ रोया खाया सब आज स्वप्नवत हुआ। आज जो हो रहा है कालान्तर में वह स्वप्नवत होगा तो अभी ही इसे स्वप्नवत क्यों न मानें?

जातस्य हि ध्रुवो मृत्युर्भूतकालात्यये सति।
स्वप्नवत् स्यात्तथा सर्वं जगच्च समयात्यये॥ ३५३॥
पूर्वकल्पभवं सर्वमधुनाऽभूदसत्समम्।
असत्कल्पमिदंकल्पभवं कल्पान्तरे भवेत्॥ ३५४॥
असत्कल्पमतः सर्वं मोहं क्वाप्येव मा गमः।
मन्वानस्यैवमद्वैतविज्ञानं परिपुष्यति॥ ३५५॥

जो उत्पन्न हुआ वह निश्चित मरेगा। समय बीतने पर स्वप्नवत होगा। वैसे सभी जगत नष्ट होकर स्वप्नवत् होगा। पूर्वकल्पीय सभी आज असत् तुल्य हो गया कोई मनुष्य स्मरण ही नहीं करता। आज का सब कल्पान्तर में उसके बाद फिर कभी भी स्मरण नहीं करेगा। अतः पूरा जगत असत् सम है, मोह व्यर्थ है ऐसा मनन करने पर अद्वैत विज्ञान निश्चित परिपुष्ट होता है।

शरीरपोषणं स्थूलं सूक्ष्मं तु ज्ञानपोषणम्।
पूषा प्रचोदनाद्दोष-विशेषपरिशोषणात्॥ ३५६॥

देहपोषण स्थूल है, ज्ञानपोषण सूक्ष्म है। दोष विशेष नाशन से पूषा पोषण करता है।

प्रज्ञामान्द्यादिकं प्रोक्तं ज्ञानस्य प्रतिबन्धकम्।
धियां प्रचोदनात्प्रज्ञामान्द्यं पूषा विपेषयेत्॥ ३५७॥

प्रज्ञामान्द्यादि ज्ञान प्रतिबन्धक है। प्रज्ञामान्द्य को बुद्धि प्रचोदन से पूषा हटायेगा।

## विश्ववेदाः

वेत्तेर्वेदस्त्वसुन्नन्तो विश्वं यो वेत्त्यसौ तथा।
वेदनं सर्वविषयविशेषज्ञानमुच्यते॥ ३५८॥

**यः सर्वज्ञः सर्ववित्तन्-मन्त्रभाष्ये तथोदितम्।**
**हिरण्यगर्भं तं प्राहुः सूर्यमण्डलवर्त्तिनम्॥ ३५९॥**

विश्व को जाननेवाला विश्ववेदा है। सर्व विषय विशेष ज्ञान भाष्य में दिखाया है। सूर्यमण्डलवर्ती हिरण्यगर्भ ही विश्ववेदा है ऐसा विश्व ज्ञान बताते हैं।

**समष्टिसूक्ष्मदेहाभि-मानिनं च समूचिरे।**
**सर्ववित्त्वं ततो ह्यस्य पश्यतः सर्ववासनाः॥ ३६०॥**
**वासनामय एवायं संसारः परिकीर्त्तितः।**
**स्मृत्यात्मना परिणतां लोकाः पश्यन्ति वासनाम्॥ ३६१॥**
**समुद्बुध्यन्ति यावत्यो वासनास्ताः प्रकाशयेत्।**
**जीवो हिरण्यगर्भो वा तेन तौ तद्विदौ मतौ॥ ३६२॥**
**अदृष्टादिभिरुद्बोधो जीवस्य तु कदाचन।**
**परं हिरण्यगर्भस्य स्वेच्छयोद्बोध इष्यते॥ ३६३॥**
**यद्बोद्भूतामनुद्भूतां सर्वां पश्यति वासनाम्।**
**अतः स भूत-भाव्यादि-सर्ववित् समुदीरितः॥ ३६४॥**

समष्टि सूक्ष्म शरीराभिमानी होने से हिरण्यगर्भ सर्ववित् है। वासनामय ही तो संसार है स्मृतिरूप होने पर लोग भी स्ववासना को देखते हैं। अदृष्ट विशेष से वासनोद्बोध होता है, उद्बुद्ध अनुद्बुद्ध सबको हिरण्यगर्भ देखता है, अतः भूत भावि सबका ज्ञान उसे होता है।

**नारायणं तु सवितृमण्डलस्थं ननूचिरे।**
**सत्यं हिरण्यगर्भः स नारायणपदोदितः॥ ३६५॥**

'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' कहा है? ठीक है। हिरण्यगर्भ ही नारायण है।

**सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।**
**आप एव ससर्जादौ तासु बीजमवासृजत्॥ ३६६॥**
**तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।**
**तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥ ३६७॥**

इत्येवं मनुनाख्यातं हैमेजातत्वतस्तु सः।
हिरण्यगर्भ एवेति मेधातिथ्यादयो जगुः॥ ३६८॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥ ३६९॥
इति नारायणपदव्युत्पत्तिं तदनन्तरम्।
ऊचे हिरण्यगर्भोऽतो नारायणपदाभिधः॥ ३७०॥

स्वयंभू ने प्रजासृष्ट्यर्थ प्रथम जलसृष्टि कर उस में बीज डाला। वह सूर्यप्रभ सुवर्णमय अण्ड बना। उसमें ब्रह्मा उत्पन्न भये ऐसा मनु ने कहा। सुवर्णाण्ड उत्पन्न होने से वही हिरण्यगर्भ है ऐसा मेधातिथि आदि व्याख्याकारों ने कहा। आगे मनु कहते हैं 'आपः' जल को ही नार कहते हैं। वह अयन-आश्रय होने से उस हिरण्यगर्भ को नारायण बताया।

परे नरसमूहस्या-ऽऽश्रयं नारायणं जगुः।
व्यष्टीनामाश्रयस्तावत् समष्टिर्हि भवत्यतः॥ ३७१॥

दूसरे कहते हैं नराणां समूहः नारः (तस्य समूहः सूर्य सचित नर से अण् हुआ) व्यष्टि समुदाय का आश्रय समष्टि होने से नारायण समष्टिरूप हिरण्यगर्भ ही है।

हिरण्यगर्भो वेदार्थ-गोचरां वासनां प्रभुः।
उद्बोध्य प्रेरयत्वर्थ-मननाय शमाय नः॥ ३७२॥

तब मन्त्रार्थ होगा-हिरण्यगर्भ वेदार्थ विषयक वासना को उद्बुद्ध कर शम हेतु अर्थ मनन के लिये हमें प्रेरित करें।

येषां श्रवणमात्रेण सद्बोधो नोपजायते।
तेषां मननमापाद्य स्वस्ति पूषा दधात्वसौ॥ ३७३॥

श्रवण मात्र से सद्बोध जिनको नहीं होता उन्हें मनन करा कर पूषा मंगल करे।

धनवाची च भवति वेदश्शब्दः क्वचित् क्वचित्।
निघण्टौ कश्यपेनापि पठितो धननामसु॥ ३७४॥

**विद्लृ लाभे ततश्चासुन्ययं शब्दश्च सिध्यति।**
**भुवनार्थे स्मृतं विश्वं तद्धनं भास्वतो मतम्॥ ३७५॥**
**चराचरस्य जगत आत्मा तस्य धनं जगत्।**
**सूर्य आत्माऽस्य जगतस्तस्थुषश्चेति यच्छ्रुतम्॥ ३७६॥**

वेदस् शब्द का धन भी अर्थ है। निघंटु में धननामों में वेदस् आया है। 'विद्लृलाभे' धातु से यह शब्द बना है। 'विश्वं कृत्स्ने च भुवने' ऐसा कोश है। भुवन जिस का धन हो वह विश्ववेदा है। 'सूर्य आत्मा जगतस्तस्थुषश्च' इस श्रुति से चराचर का आत्मा मालिक सूर्य है।

**धनस्य क्रियते स्वस्ति धनिभिः, त्वं च नः धनी।**
**विश्ववेदाः स नः स्वस्ति कुर्विति प्रार्थ्यतेऽर्यमा॥ ३७७॥**

धन का मंगल धनस्वामी करता है। हे पूषन् तुम्हारा हम धन है अतः हमारा भी मंगल अवश्य करो।

**मानवो मननादेव मननं नो महाधनम्।**
**न विना मनन चैव शब्दोऽयं सार्थको मयि॥ ३७८॥**
**औष्णयहीनोऽनलः कः स्याद् रसहीनं च किंजलम्।**
**गन्धहीना तुनका पृथ्वी मा वोऽमननश्च कः॥ ३७९॥**
**तत्रापि स्वात्मविषय-मननं सर्वतोऽधिकम्।**
**तद्विना नैव सार्थक्यं मानवस्यास्य जन्मनः॥ ३८०॥**
**शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक्।**
**ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते॥ ३८१॥**
**इत्यादि दर्शितं सम्यङ् मननं शास्त्रवेदिभिः।**
**तादृशं स्वात्ममननं विश्ववेदा दधातु नः॥ ३८२॥**

मननवाला ही मानव है। मनन के बिना हम में मानव शब्द की भी सार्थकता नहीं है। गरमी न हो तो अग्नि क्या है, रस न हो तो जल क्या है, गन्ध न हो तो पृथ्वी क्या है। मनंन बिना मानव क्या। आत्म मनन सर्व श्रेष्ठ है। उसके बिना मानव जन्म की ही सार्थकता नहीं है। पञ्चदशी आदि में प्रथम मनन दिखाया। शब्दज्ञान, स्पर्शज्ञान आदि में विषय नाना है। ज्ञान

एकरूप है वही आत्मा है इत्यादि। ऐसा मनन विश्ववेदा पूषा करायें।

## स्वस्ति नस्तार्क्ष्यः

दधातु स्वस्तिनस्तार्क्ष्यो गरुडो विष्णुवाहनः।
गत्यर्थकात्तृक्षधातोरचि तृक्षः स कश्यपः॥ ३८३॥
गर्गादित्वादणि भवेत्तार्क्ष्योऽपत्यार्थके पदम्।
द्विजिह्वानां विनाशाय तस्य जन्म प्रजापतेः॥ ३८४॥
कुत्सितद्रवणात् कद्रुः काद्रवेयास्तदात्मजाः।
सुगतेः कश्यपात् कद्र्वां कुगतौ फणिनोऽभवत्॥ ३८५॥
विनताया अपत्यं च वैनतेयो महान भूत्।
विशेषेणात्मनि नता नम्रा वा विनता किल॥ ३८६॥
काद्रवेयाः किल प्रायो दुष्टाः पातालवासिनः।
खेगतिर्वैनतेयश्च मातृदोषगुणान्वयात्॥ ३८७॥
गरुद्भ्यामयते व्योम्नि गरुडोसौ तलोमतः।
अपकृष्टतरा आद्या तथोत्कृष्टतरोऽपरः॥ ३८८॥

तार्क्ष्य हमारा मंगल करे। तृक्ष-कश्यप उसका पुत्र तार्क्ष्य-गरुड जो द्विजिह्व नाशार्थ पैदा हुआ। कुत्सित गतिवाली कद्द्रु उसके पुत्र काद्रवेय-सर्प। कश्यप की ही दोनों पत्नियां थी। विनता आत्मनत या नम्र थी। माता के दोष गुण से पुत्र तदनुरूप हुए। फलतः सर्प पातालवासी अधोगति हुए और गरुड आकाश गति ऊर्ध्वगति हुए। गरुत्-पंख, दो पंखों से जो आकाश में डयन उड्डयन करे वह गरुड है। त का लोप हुआ।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां जायते परमं पदम्॥ ३८९॥
इति वासिष्ठवचनाद् ज्ञानकर्मयुतः पुमान्।
अयते परमाकाश इत्येषा गारुडी गतिः॥ ३९०॥

दो पंखों से आकाश में पक्षियों की गति है वैसे ज्ञान कर्म से परम गति होती है। इस वसिष्ठ वचन से ज्ञान कर्मयुक्त पुरुष परम पद में पहुंचता

है। यही तार्क्ष्य सूचित गारुडी गति है।

कर्तृत्वादिविमर्देन ज्ञानं स्यात् कर्म तद्वता।
कथं समुच्चयो ज्ञान-कर्मणोरिति चेन्न तत्॥ ३९१॥
विज्ञानकर्मणोर्मोक्षे मा भूत समसमुच्चयः।
तथापि स्वीकृतः सद्भिस्तयोः क्रमसमुच्चयः॥ ३९२॥

कर्तृत्वादि समास हो तब ज्ञान होता है। कर्तृत्वादि हो तब कर्म होता है। तब ज्ञान कर्म समुच्चय कैसे वसिष्ठजी कह रहे हैं। सुनो। ज्ञान और कर्म का समसमुच्चय भले न हो, क्रम समुच्चय संतों ने माना है।

ननु दृष्टान्तवैषम्यं यतः समसमुच्चयः।
पक्षयोर्व्योमगमने न मोक्षगमने तु सः॥ ३९३॥

पू. - दृष्टान्त विषम है। पंखों का आकाशगमन में समसमुच्चय है। मोक्षगमन में ज्ञान कर्म का समसमुच्चय नहीं है।

सत्यं यद्यत्फलेच्छुः स्याच्छ्रौतं तत्तदियात्फलम्।
तत् संयोगपृथक्त्वेन स्वर्गो वा ज्ञानमेव वा॥ ३९४॥
न च श्रवणतो ज्ञानं न यज्ञेनेति सांप्रतम्।
चित्तशुद्ध्यादिकद्वारा कर्मापि ज्ञानकारणम्॥ ३९५॥
न च कर्मान्यथासिद्धं, चित्तशुद्धिर्हि कारणम्।
भक्त्यादिभिश्च तच्छुद्ध्यानैकन्त्यादिति सांप्रतम्॥ ३९६॥
चित्तमालिन्यविरहोऽभावात्मा शुद्धिरिष्यते।
कामक्रोधादि मालिन्यं तत्तु स्यात्प्रतिबन्धकम्॥ ३९७॥
प्रतिबन्धकशून्यत्वमागते तर्हि कारणम्।
नैतन्नखल्वभावो हि कारणं वेदसम्मतम्॥ ३९८॥
स्यात्तत्तदव्यवहितो-त्तरे तत्तद्धि कारणम्।
ज्ञानेऽनैकान्तिकत्वं तद् न भक्तौ नापि कर्मणि॥ ३९९॥

उ. - फलेच्छा न हो तो मीमांसकों ने कर्म को निष्फल माना है (इष्टसाधनताज्ञान कर्म कारण है। तब इच्छा आ ही गयी) कर्म का फल

संयोग पृथक्त्वेन स्वर्गादि और ज्ञानादि है। यह कहो कि श्रवणादि ज्ञानकारण है, न कि यज्ञादि। नहीं। चित्तशुद्धि द्वारा यज्ञादि भी कारण है। यह कहें कि चित्तशुद्धि ही कारण है यज्ञादि कुलालपितृवत् अन्यथा सिद्ध है। नहीं। भक्ति आदि भी कारण होने से अनैकान्तिक होगा। भक्ति आदि भी चित्तशुद्धि द्वारा कारण मानो तो चित्तशुद्धि ही कारण निश्चित हुआ। नहीं। मालिन्याभाव ही चित्तशुद्धि हैं। अभाव कारण नहीं होता। रागद्वेषादि मालिन्य है वह ज्ञान का प्रतिबन्धक मात्र है। तब प्रतिबन्धक संसर्गाभावत्वेन कारण हो गया। नहीं नहीं। अभाव को वैदिक कारण मानते ही नहीं है। यह सब नैयायिकों की बात है। अभाव असत है कारण कैसे होगा। कर्म भक्ति आदि परस्पर व्यभिचरित ज्ञानकारण कैसे? अव्यवहितोत्तर जोड दो। भक्त्युत्तरज्ञान में भक्ति कारण है, कर्मोत्तरज्ञान में कर्म कारण है।

**यज्ञैर्विविदिषन्तीति यज्ञं वेदनकारणम्।**
**भक्त्या माभिजानातीत्याह भक्तिं च कारणम्॥ ४००॥**

विविदिषन्ति यज्ञेन दानेन तपसा इत्यादि श्रुति यज्ञादि को वेदनकारण बताती है। भक्त्या मामभिजानाति यह भगवदुक्ति भक्ति को ज्ञानकारण बताती है।

**चित्तशुद्ध्या विजानीयादिति कुत्रापि नोदितम्।**
**यतः शुद्धिरभावात्मा भावः सर्वत्र कारणम्॥ ४०१॥**

चित्तशुद्धि से ज्ञान प्राप्त करो ऐसा कहीं नहीं कहा। क्योंकि भाव ही कारण होता है।

**नाभावः कारणं तर्हि कार्यं स तु कथं भवेत्।**
**न चेष्टापत्तिरुचिता तत्कार्यत्वावलोकनात्॥ ४०२॥**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये।**
**एवं भगवतैवोक्ता चित्तशुद्धेर्हि कार्यता॥ ४०३॥**
**मैवं नाशोऽदर्शनं स्याद्धात्वर्थोऽदर्शनं यतः।**
**नाशोऽसद्भाव एवेति निगदन्ति बुधाः परे॥ ४०४॥**

घटादेर्नन्वसद्भावस्सत्ता नैव तु युज्यते।
तथा चाहस्म भगवान् नाभावो विद्यते सतः॥४०५॥
सत्यं घटादिकं सन्तं भवन्तं प्राह कः खलु।
सदसद्भिन्नमेवेदं यतो हि सकलं जगत्॥४०६॥
दृष्टिसृष्टं खलु जगद् दृष्ट्यभावे न विद्यते।
अदर्शने णशं प्राह तत एव हि पाणिनिः॥४०७॥

अभाव कारण नहीं तो कार्य भी नहीं होना चाहिये। इष्टापत्ति नहीं कर सकते। भगवान ने कहा कर्म से चित्तशुद्धि (मालिन्य नाश) होती है। नहीं। नाश का अदर्शन अर्थ पाणिनि ने बताया है। असत् होना नाश है ऐसा अन्य लोग कहते हैं। परंतु सत् का अभाव नहीं होता इस गीतोक्ति से विरोध होगा। नहीं। जगत् सदसद्भिन्न है, सत कहां है। दृष्टि सृष्टि होने से जब तक दृष्टि है तब तक प्रतीत होगा-'यह है'। दृष्टि बंद हो गयी तो 'नहीं है' बोलते हैं, 'नष्ट हो गया' बोलते हैं। नाश नाम कोई उत्पन्न नहीं होता।

कर्मादिभिर्भवेज्ज्ञान-मिति सिद्धं न शुद्धितः।
स्वर्गेप्सिनः फलं स्वर्गो ज्ञानं ज्ञानेप्सिनस्तथा॥४०८॥
स्वर्गकामो यजेतेति स्वर्गं यज्ञेन भावयेत्।
यज्ञैर्विविदषन्तीति यज्ञैर्ज्ञानं च भावयेत्॥४०९॥

इससे यह सिद्ध हुआ कि कर्मादि से ज्ञान होगा चित्तशुद्धि कारणात्मक नहीं। स्वर्गेच्छु को स्वर्ग फल और ज्ञानेच्छु को ज्ञान मिलेगा। स्वर्गकामो यजेत का अर्थ होगा यज्ञ से स्वर्ग उत्पन्न करो। यज्ञैर्विविदिषन्ति का अर्थ होगा-यज्ञादि से ज्ञान उत्पन्न करो।

ज्ञानं निर्विषयं नावगम्यते काम्यतेऽपि वा।
तमेतमिति तत्रैव विषय श्चसमर्प्यते॥४१०॥

निर्विषय ज्ञान न जाना जाता है और न उसकी कामना बनती हैं। 'तमेतं' उस आत्मा को ऐसा विषय समर्पण भी है। आत्मविषयक ज्ञान ही कामविषय है।

भाष्यकृच्चौपनिषदं पुरुषं तत्पदं जगौ।
विना तद्वेदनं नैव स्यात्तद्वेदनकामना॥४११॥
वेदने ननु संजाते वेदनेच्छा कुतो भवेत्।
सिद्धे नेच्छेति सिद्धान्तात् सिद्धत्वाद् वेदनस्य हि॥४१२॥
सामान्यावगतस्यापि विशेषावगमैषणा।
स्यादित्यपि न, सामान्यविशेषौ पुंष्यसंमतौ॥४१३॥
मैवं परोक्षविदितेऽपरोक्षेच्छावलोक्यते।
उक्तिर्विविदिषन्तीति युक्तैवातः श्रुतिस्थिता॥४१४॥

भाष्यकारों ने भी तमेतं का औपनिषद पुरुष अर्थ बताया है। ज्ञान के बिना इच्छा नहीं होगी। ज्ञान हो गया तब भी तो ज्ञानेच्छा नहीं होगी? यह कहें कि सामान्य ज्ञान से विशेष को जानने की इच्छा हो सकती है। नहीं। ब्रह्म निःसामान्य निर्विशेष है। इसका जवाब यह है कि परोक्ष ज्ञान होने पर भी अपरोक्ष ज्ञान की इच्छा होती है। श्रुति में विविदिषन्ति का अर्थ है अपरोक्ष ज्ञानेच्छा करते हैं।

ननु वेदानुवचनात् परोक्षा जायते मतिः।
ततः परोक्षधीरेव भवेद्विविदिषास्पदा॥४१५॥
नैवं समानपठितैर्यज्ञाद्यैर्वेदनं कथम्।
चित्तशुद्ध्यर्थताति चेत्तुल्यं वेदानुवचनेन च॥४१६॥
निष्कामयज्ञदानाद्यैश्चित्तशुद्धिर्यथा मता।
वेदानुवचनेनापि चित्तशुद्धिस्तथेष्यते॥४१७॥

वेदानुवचन से परोक्ष ज्ञान होता है। अतः विविदिषाविषय परोक्ष ज्ञान है। नहीं। समान पठित यज्ञदानादि से वेदन नहीं होता। चित्तशुद्धि द्वारा सहकारी होता है कहें तो वेदानुवचन भी चित्तशुद्धि द्वारा सहकारी मात्र होगा।

मुख्यं वेदानुवचनं यज्ञाद्याः सहकारिणः।
तन्न सत् वचनं नाम कथनं ह्यन्वधीतितः॥४१८॥
नित्यस्वाध्याय एवायमिति भाष्येऽपि दर्शितम्।

स्वाध्यायं जपमेवाह मन्त्राणां व्यास एव च॥४१९॥

वेदानुवचन मुख्य है। चित्तशुद्धि द्वारा यज्ञादि सहकारी हैं। नहीं। वचन का कथन अर्थ है जो अध्ययन के बाद में हो वह अनुवचन है। नित्य स्वाध्याय ही वेदानुवचन है ऐसा भाष्य में भी कहा है। स्वाध्याय पवित्र मन्त्रों का जप है ऐसा व्यास वचन है।

नन्वात्मवेदनं पूर्वं परोक्षमिति नैव सत्।
अपरोक्षे परोक्षं न विरोधात् पुंसि वेदनम्॥४२०॥
ततो हि तत्त्वमस्यादि-शब्दैरुक्ताऽपरोक्षधीः।
वेदान्त वेदिभिर्बन्धैरिति चेदुच्यते शृणु॥४२१॥
न सद्रूपाऽपरोक्षत्व-जातिर्ब्रह्मणि विद्यते।
स्याच्चेदद्वैतहानिः स्यादसतो न विरोधिता॥४२२॥
निधर्मिकं स्वयंज्योतिरपरोक्षं यदेष्यते।
को विरोधोऽक्षमान्यायात् परोक्षज्ञानजन्मनि॥४२३॥
अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥४२४॥
अपरोक्षधिया तस्मिन्नज्ञानावरणक्षये।
प्रकाशमानं भवति स्वयंज्योतिरिति स्थितिः॥४२५॥

ब्रह्मज्ञान स्वाध्यायाध्ययन से प्रथम परोक्ष होगा यह कहना ही गलत है। अपरोक्ष ब्रह्म में आत्मा में विरुद्ध परोक्ष ज्ञान नहीं हो सकता। इसीलिये तत्त्वमसि आदि से अपरोक्ष ज्ञान माना गया है। इसका उत्तर यह है कि ब्रह्म में सद्रूप कोई अपरोक्षत्व जाति है तो अद्वैत हानि होगी। निर्धर्मक स्वयं ज्योति ब्रह्म ही अपरोक्ष है तो 'अक्षमा भवतः केयं' इस न्याय से परोक्ष ज्ञान होने में क्या विरोध है जबकि पूरा संसार उसमें उत्पन्न हुआ। वृत्ति ज्ञान अपरोक्षरूप हो जाती है तो अज्ञानावरण नाश होने से स्वयं ज्योति ब्रह्म प्रकाशमान होता है इतनी बात है।

ननु ज्ञानापरोक्षत्वे किं प्रजोयकमिष्यताम्।
अपरोक्षार्थकत्वं चेदन्योन्याश्रयता तदा॥४२६॥

ब्रह्मास्तीत्यादि वाक्याच्च ब्रह्मसाक्षात्कृतिर्भवेत्।
मैवं प्रमातृचैतन्याभिन्नचैतन्यता तथा॥४२७॥
तन्निरूपकता वृत्तौ स्याज्ज्ञानस्यापरोक्षता।
तदभावे परोक्षत्वं ज्ञानस्येति विदां मतम्॥४२८॥

ज्ञान अपरोक्ष या परोक्ष होने में ही प्रयोजक क्या है? अर्थ अपरोक्ष हो तो ज्ञान अपरोक्ष मानो तो अन्योन्याश्रय दोष है। ज्ञान अपरोक्ष हो तो अर्थ अपरोक्ष और अर्थ अपरोक्ष हो तो ज्ञान अपरोक्ष। फिर ब्रह्म है इस वाक्य से अपरोक्ष होने लगेगा। दशमोऽस्ति इस वाक्य से अपरोक्ष होने लगेगा। इस पर आचार्यों का कहना है कि प्रमातृ चैतन्य और विषय चैतन्य एक होने पर विषय और ज्ञान अपरोक्ष होंगे और ज्ञान भी अपरोक्ष होगा। प्रमातृ अभिन्नता लाघवात् कह सकते हैं।

दुःसंशयविपर्यासौ भवेतां प्रतिबन्धकौ।
तदभावे तु साक्षात्वं प्रायः शब्दस्थले भवेत्॥४२९॥
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः।
विषयासक्तिरप्युक्ता ज्ञानस्य प्रतिबन्धकाः॥४३०॥
दिग्भ्रमः खलु केषांचित्पश्यतोप्युदयं रवेः।
न निवर्तेत तद्वद्धि ब्रह्मण्यपि विपर्ययः॥४३१॥
प्रमाणेषु स्थितेष्वव संशयं कुरुते कुधीः।
तमादायाह भगवान् संशयात्मा विनश्यति॥४३२॥
तदर्थमेव मननं निदिध्यासनमेव च।
श्रुतिर्विधत्ते मन्दादेरुपास्त्यादिकमेव च॥४३३॥

दुस्तर संशय तथा विपर्यय साक्षात्कार के प्रतिबन्धक भी होते हैं। शाब्द ज्ञान से उनका निरास होने पर ही साक्षात्कार होगा। बुद्धिमान्द्य से कुतर्कादि भी प्रतिबन्धक बताये हैं। दिग्भ्रम हो गया तो सूर्योदय दिखने पर भी बहुतों को विपरीत दिशा दिखती है। प्रमाण का ढेर हो तो भी किसी किसी को संशय नहीं हटता। उनको गीता में संशयात्मा विनश्यति बताया हैं। अतः श्रुति ने मनन और निदिध्यासन करने बताया फिर भी मन्द

बुद्धियों को समझ में नहीं आता तो उपासनादि विधान किया।

**प्रज्ञामान्द्यमुपास्त्या च श्रद्धया च कुतर्कता।**
**निदिध्यासासमृद्ध्या च विपर्ययमहाग्रहः॥४३४॥**
**भक्त्या च विषयासक्ति - र्हरावपि गुरावपि।**
**इति रीत्या निवर्त्तेरन् यदैव प्रतिबन्धकाः॥४३५॥**
**स्वाभेदबोधकाद् वाक्याद् स्वयंज्योतिः प्रकाशते।**
**दशमस्त्वमसीत्यत्र यथा बाधकबाधनात्॥४३६॥**

सरस्वती आदि की उपासना से प्रज्ञामान्द्य निवृत्त होता है। श्रद्धा से कुतर्क, पर्याप्त निदिध्यासन से विपर्यय दुराग्रह महाग्रह; हरिगुरु में भक्ति से विषयासक्ति प्रतिरूप प्रति निवृत्त होते हैं तब स्वाभेदबोधक वाक्य से स्वयं ज्योति प्रकाशित होता है जैसे दशमस्त्वमसि से।

**इदं तु बोध्यं चित्तत्त्वमनाद्यन्तं स्वयंप्रभम्।**
**मायाऽऽवृतौ बहिस्थानामावृतं न प्रकाशते॥४३७॥**

चित्तत्त्व (चैतन्य) आदि-अन्तरहित है, स्वयं प्रकाश है। उस पर माया का आवरण होने से उस माया को लेकर जो चित्त से बाहर है उसके लिये आवृत होने से प्रकाशित नहीं होता। जैसे सूर्य के सामने बादल है उस बादल से जो बाहर है (नीचे है) उसके लिये सूर्य आवृत है। बादल के अंदर (ऊपर) है उसके लिये नहीं।

**अहमाकारवृत्तिस्तु नित्यं तत्र प्रवर्तते।**
**सुप्तोत्थिते स्वविषयसंशयादेरदर्शनात्॥४३८॥**

अहमाकारवृत्ति नित्य ही चित्तत्त्व में रहती है। यही कारण है सुषुप्ति में उठने पर मैं था कि नहीं, मैं नहीं था इत्यादि संशय विपर्यय नहीं होता। मैं था ही ऐसा निश्चित स्मरणात्मक ज्ञान होता है।

**वृत्त्यन्तर्नास्ति सा मायाऽऽवृतिनाशक सत्त्वतः।**
**वृत्तिर्विरोधिनी तत्र वर्ततां कथमावृतिः॥४३९॥**
**ततोऽनावृतचैतन्य - तादात्म्यादपरोक्षता।**
**वृत्तेरनादिभावाच्च चोद्यं तत्र न विद्यते॥४४०॥**

वृत्ति और चैतन्य के बीच में मायावरण नहीं है। क्योंकि वृत्ति आवरणनाशिका बैठी है। नाशक होने से वृति विरोधिनी बैठी है। तब अनावृत्त चित्तादात्म्य होने से वृत्ति अपरोक्षात्मिक होगी। इसमें अन्योन्यश्रय होगा। चित्तादात्म्य हो तो अपरोक्षता वृत्ति में, अपरोक्ष हो तब आवरण भङ्गकारी होने से विरोध होगा। नहीं। अनादि काल से चित्तादात्म्य प्राप्त वृत्ति होने से आवरण बीच में नहीं रह सकता। अनादि में अन्योन्याश्रयादि दोष नहीं होता।

**तत्त्वमस्यादिवाक्येन भेदे ब्रह्मणि निर्हृते।**
**तदावरणभङ्गेन ब्रह्मात्मत्वं प्रकाशते॥ ४४१ ॥**

तत्त्वमसि वाक्य से ब्रह्म में जीवभेद निराकरण हुआ तो वही आत्मवृत्ति ब्रह्म में पहुंचकर ब्रह्मावरण का भी भंग कर देगी तब ब्रह्मात्म भाव प्रकाशमान होगा।

**ब्रह्मणो व्यापकत्वेनाऽऽत्मनि भेदे निराकृते।**
**तदावरणभङ्गेनाऽपरिच्छिन्नात्मदर्शनम् ॥ ४४२ ॥**

तत्त्वमसि के समान त्वंतदसि का भान होने से आत्मा में ब्रह्मभेद निराकरण होने से ब्रह्मगत व्यापकत्व का भी आवरणभंग होने से अपरिच्छिन्न आत्मदर्शन होता है।

**एतच्चोक्तं भगवता भाष्यकारेण सुस्फुटम्।**
**वाक्यवृत्तौ, तद्विवृतौ वीक्ष्यतां च विशेषतः॥ ४४३ ॥**

इस बात को अत्यन्त स्पष्टरूप से वाक्यवृत्ति में भाष्यकार ने बताया है। उसकी अस्मत्कृत विवृति में विशेषरूप से उसका वर्णन है वहीं उसे देख लेवें।

**दशमोऽस्तीति वाक्येन भेदो नैव निवर्तते।**
**स्वाऽभेदाऽबोधनान्नैव दशमो हि प्रकाशते॥ ४४४ ॥**
**दशम,स्त्वमसीत्युक्तावाश्चर्यं संशयोऽथवा।**
**गणनायां निजाभेदाद्दशमः संप्रकाशते॥ ४४५ ॥**

दशमोऽस्ति यहां अपने से अभेद बोधक शब्द न होने से भेदनिवृत्ति नहीं होती। दशम प्रत्यक्ष भी नहीं होता। दशमत्वमसि में प्रथम आश्चर्य

वासंशय होगा और गणना से अपने से अभिन्नता प्रामाणिक होने से प्रत्यक्ष होगा।

ज्ञानस्थानावृतचितितादात्म्यादपरोक्षता ।
तद्गोचरत्वाद्विषयाऽऽ - परोक्ष्यं केचिदूचिरे॥४४६॥
साक्षादनावृतचितितादात्म्यात्तत्तु युज्यते।
सर्वज्ञानेषु भवति चित्तादात्म्यं यतः स्फुटम्॥४४७॥
स्मृतिवृत्तेरपि ततोऽ परोक्षत्वाद् घटादयः।
तदीयविषयत्वेन गच्छेयुरपरोक्षताम्॥४४८॥

अनावृत चित्तादात्म्य से ज्ञान अपरोक्ष होता है। उसका विषय होने से घटादि अपरोक्ष है ऐसा कुछ लोग मानते हैं। किन्तु साक्षात् अनावृत्त चित्तादात्म्य से घटादि अपरोक्ष होता है यही मानना उचित है। अन्यथा सभी ज्ञान अपरोक्ष होने से स्मृति विषय घटादि भी अपरोक्ष होने लगेंगे।

तादात्म्यं तु न सम्बन्ध इत्येतद् विदुषां मतम्।
सम्बन्धत्वेऽभिन्नतैव वाच्येत्यन्यत्र विस्तरः॥४४९॥

तादात्म्य कोई सम्बन्ध नहीं है। यदि सम्बन्ध हेतु चिदभिन्नत्व कहो इत्यादि अन्यत्र विस्तार है।

एवं च स्वप्रभत्वेनाऽपरोक्षेऽपि परोक्षधीः।
शब्दादिना भवेदेव ततो विविदिषा भवेत्॥४५०॥
तया समुच्चयश्चैव कर्मादीनां भवेदिति।
उभाभ्यामेव पक्षाभ्यामित्युक्तोऽस्तु समुच्चयः॥४५१॥

इस प्रकार विरोधादि न होने से अपरोक्ष ब्रह्म में परोक्ष ज्ञान एवं विविदिषा संभव है। शब्दादि से परोक्ष ज्ञान होगा। उसीसे कर्मादि का समसमुच्चय उभाभ्यामेव पक्षाभ्यां इत्यादि वासिष्ठ वचन में उपपन्न है।

ननु तत्र फलं प्रोक्तं जायते परमं पदम्।
मोक्ष एव स, तत्रैव युज्यते न समुच्चयः॥४५२॥
तन्न सत् जायमानो हि मोक्षः साक्षात्वमात्मनः।
जीवन्मुक्तिः खलु ब्रह्मसाक्षात्कारो निगद्यते॥४५३॥

साक्षात्कारे कृते तेन नास्ति कर्मसमुच्चय।
स्यात्साक्षात्कारपर्यन्तो ज्ञानकर्म समुच्चयः॥४५४॥

पू. - ज्ञानकर्म समुच्चय फल वासिष्ठ में परम पद बताया। न कि साक्षात्कार। सुना परम पद में जायते का अन्वय नहीं होगा। उत्पन्न होनेवाली जीवन्मुक्ति ब्रह्म साक्षात्कार ही है। उसी को लेकर जीवन्मुक्त पद है। साक्षात्कार और कर्म का समुच्चय न हो साक्षात्कारार्थ ज्ञानकर्म समुच्चय तो होगा ही।

किं च जातेऽपि च ब्रह्मसाक्षात्कारे महात्मनः।
सद्यः शरीरपातो न क्वचिदप्यवलोक्यते॥४५५॥
विदेहमुक्तिर्भवति देहपातादनन्तरम्।
संस्कारः शिष्यते तेन प्रारब्धं चेति सम्मतम्॥४५६॥
संस्कारेण च तेनैव योगभ्रंशे पुनर्जनिः।
तस्माद्योग्यनि कर्माणि कर्तव्यानि महात्मनाम्॥४५७॥
उक्तं च भाष्ये कर्माणि नाग्निहोत्रादिकानि हि।
ब्रह्मचर्यं तपः सत्यवाक्यं शमदमावपि॥४५८॥
स्युः साधकतमं ध्यान-धारणादिकमेव च।
कर्तृत्वाभिनिवेशेन विनैव सुकरं बहु॥४५९॥
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः।
इत्युक्तं हरिणा चैव देहरक्षणमात्मनः॥४६०॥
देहे सत्येव भवति ज्ञानाभ्यासो न चान्यथा।
तथा च ज्ञानकर्मभ्यां जायते परमं पदम्॥४६१॥

और भी, ब्रह्म साक्षात्कार हो तुरंत देहपात और विदेहमुक्ति नहीं होती। अतः संस्कारशेष मानना होगा। प्रारब्ध भी। पूर्व संस्कार से योग भ्रंश भी संभव और पुनर्जन्म भी संभव है। उससे बचने के लिये ज्ञान अविरुद्ध योग्य कर्म करना चाहिये। और अग्निहोत्रादि ही कर्म हो ऐसी बात नहीं। तैत्तिरीय भाष्य में ही ब्रह्मचर्य, तप सत्यवचनादि एवं मुख्य मनननिदिध्यासनादि कर्म बताया है। कतृत्व-भोक्तृत्वादि अभिनिवेश के बिना ये सब कर सकते हैं। भगवान कहते हैं। कर्म किये बिना तुम्हारी

शरीर यात्रा भी नहीं होगी। शरीर निर्वाह न हो तो मनन निदिध्यासन क्या होगा? अतः वसिष्ठजी ने ठीक ही कहा।

ननु कर्तृत्वधीर्नो चेत्कर्माभासो भवेदयम्।
कर्तृत्वभावनासत्त्वे कथं ज्ञानसमुच्चयः॥ ४६२॥
प्रसुप्तस्यत्यथा पार्श्व परिवर्तादिकाः क्रियाः।
न हि दंशादिहनने पापं तस्य भवेत्तदा॥ ४६३॥
न,, बाधितानुवृत्त्यैव कतृत्वं तेन कर्म च।
अयं कर्म करोतीति लोकव्यवहृतीक्षणात्॥ ४६४॥
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि।
इति ज्ञानित्वपक्षेण हरिणा कर्मचोदनात्॥ ४६५॥

पू. - यदि कर्तृत्व बुद्धि नहीं है तो वह कर्माभास होगा। वसिष्ठजी कर्माभास नहीं कह रहे हैं। कर्त्तृभावना हो ज्ञान उससे विरुद्ध होने से समुच्चय संभव नहीं। उ. - बाधितानुवृत्ति से कर्तृत्व एवं उससे कर्म भी होगा। लोकसंग्रहमेवापि यह ज्ञानी पक्ष को लेकर भगवान कह रहे हैं। अतः कर्तृत्वबाध होने पर भी कर्म ही वह है।

ननु भोक्तृत्वधीर्नो चेत्कर्म नैवोपपद्यते।
भोक्तृत्वभावनासत्त्वे कथं ज्ञान समुच्चयः॥ ४६६॥
अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्॥ ४६७॥
न च कर्तृत्ववद् युक्तं भोक्तृत्वमपि बाधितम्।
परिव्राज्यविधिस्तर्हि व्यर्थ एव भविष्यति॥ ४६८॥
उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः।
अयत्नतो भवन्त्यस्येत्याचार्योक्त्यवलोकनात्॥ ४६९॥

अबाधित कर्तृत्व के विनापि कर्म भले हो किन्तु अबाधित भोक्तृत्व के बिना कर्म नहीं हो सकता। भोक्तृत्व भावना हो तो ज्ञान समुच्चय कैसे हो? महाभारत में कहा है कि अकाम का कभी भी कोई भी कर्म देखा नहीं गया है। सभी क्रियायें कामना की ही चेष्टा

है। भोक्तृत्व भी बाधित मान लो। नहीं। तब परिव्राज्य विधि ('पुत्रैषणायाश्च' इत्यादि) व्यर्थ होगी। आत्मबोध हुआ तो बिना यत्न ही अद्वेष्टा सर्वभूतानां इत्यादि गुण उसमें आ जाते हैं। ऐसा आचार्य वचन है।

**भोगोत्तरमिदं सर्वं मिथ्येति सुवचं वचः।**
**तत्तु ज्ञानखलस्यैव युज्यते न तु सद्विदः॥४७०॥**

भोगोत्तर यह सब मिथ्या कहना आसान है। पर यह ज्ञान खल का लक्षण है ज्ञानी का नहीं।

**भोगसौन्दर्यतः कामश्चेष्टा तत्प्राप्तये ततः।**
**तुल्यप्रियाप्रियो यस्तु तस्य सौन्दर्यधीः कथम्॥४७१॥**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः।**
**योऽस्य सौन्दर्यधीहानात् कुतः कामः कुतः कृतिः॥४७२॥**
**सर्वारम्भपरित्यागात्क्व भोगो भोक्तृता कुतः।**
**मुग्धस्य भोगसौन्दर्यमति कामप्रवृत्तयः॥४७३॥**
**ज्ञानिनस्तदभावेन कथं कर्मसमुच्चयः।**
**ततश्च ज्ञानकर्मभ्यां न तस्य परमं पदम्॥४७४॥**

पू. - विषय सौन्दर्य में काम और उससे चेष्टा होती है। अद्वेष्टृत्वादि तुल्यप्रियाप्रियता शीतोष्णसुखदुःखसमता आदि बताया है। ऐसे व्यक्ति में विषय सौन्दर्य ज्ञान नहीं होगा, कामना नहीं होगी। वह सर्वारम्भ परित्यागी होगा। भला उसका भोग एवं भोक्तृत्व कैसे हो। ज्ञानी में यह सब न होने से कैसे कर्म तथा कर्मसमुच्चय हो।

**उच्यते परिलोक्येमां संसृतिं दुःखरूपणीम्।**
**वैराग्यात्तदकामोऽयमन्विच्छति परं सुखम्॥४७५॥**
**नन्वज्ञात्वा परानन्दं कथंकारं तमिच्छति।**
**शृणु सुप्तौ समाधौ च दृष्टत्वाच्छ्रुतितोऽपि च॥४७६॥**

उ. - सुनो। इस संसार को दुःखरूप देखकर (दुःखमेव सर्वं विवेकिनः) सांसारिक विषयों से उसे वैराग्य होता है। उसकी कामना छूट

जाती है। वह परम सुख का अन्वेषण करता है। शंका होगी कि परम आनन्द को कभी देखे बिना इच्छा अन्विच्छा आदि कैसे होगी? सुनो- सुषुप्ति में आनन्दानुभव होता है। समाधि में भी आनन्दानुभव होता है। श्रुति भी परम आनन्द को बताती है।

**द्रष्टैकः सलिलोऽद्वैत इत्युक्त्वात्मानमाह च।**
**श्रुतिरेषोऽस्य परम आनन्द इति विस्तरात्॥४७७॥**
**ततोऽयमात्मकामः सन्नन्विच्छति समुत्सुकः।**
**उपायैः श्रुतिषु प्रोक्तैस्तथाचाथर्वणा जगुः॥४७८॥**
**सत्येन लभ्यस्तपसाचात्मा ज्ञानेन चात्मनि।**
**ब्रह्मचर्येण चेक्षन्ते यतयो वीतकल्पषाः॥४७९॥**

सलिल एको द्रष्टाऽद्वैतः ऐसा द्रष्टा आत्मा को उपस्थित कर एषोऽस्य परम आनन्दः इत्यादि सविस्तर श्रुति ने उसे परमानन्द बताया। तब वह आत्मकाम हो गया। और श्रुति प्रोक्त उपायों से अन्वेषण शुरू करता है। अथर्वोपनिषत में कहा सत्य से, तप से, सम्यक् ज्ञान से और ब्रह्मचर्य से आत्मदर्शन होता है जिसे यति कल्मषरहित होकर दर्शन करते हैं।

**सुषुप्तौ च समाधौ च स्वानन्दानुभवो यदि।**
**कुतस्तदाऽऽत्मकामत्वं न मोक्षश्चेति चेच्छृणु॥४८०॥**

पू. - सुषुप्ति और समाधि में स्वात्मानन्दानुभव है तो आत्मकामता कैसे? आनन्दानुभव ही आत्मानुभव होने से मोक्ष भी क्यों नहीं? सिद्धे नेच्छा। परमानन्दाप्ति मोक्ष है।

**त्वयैतदल्पमेवोक्तं जाग्रत्यपि स विद्यते।**
**अन्नपानादिकानन्दोऽप्यात्मानन्दान्न भिद्यते॥४८१॥**
**आनन्दस्योपजीवन्ति मात्रामस्यैव सर्वके।**
**एषा समर्थयत्येतं प्रोक्तमर्थं यतः श्रुतिः॥४८२॥**

उ. - यह आपने अल्प कहा। जाग्रत में जो आनन्द अन्नपानादि का है वह भी ब्रह्म का है।

वस्तुतस्तु धनीभूतमानन्दावरणं क्वचित्।
विरलं मन्दमानन्दतरं विच्छिन्नमेव च॥४८३॥

वस्तुतः आनन्दावरण अनेक प्रकार का है। कहीं घना आवरण है, कहीं विरल कहीं मंद, कहीं मन्दतर एवं कहीं विच्छिन्न है।

आनन्दावरणं यत्र घनीभूतं निरन्तरम्।
दुःखमात्रं भवेत्तत्र सुखवार्ताऽतिदूरतः॥४८४॥
सदूषत्कणमिष्टान्न-भोगादौ विरलं मतम्।
मध्ये मध्ये दुःखलेश - संस्पर्शानुभवादिति॥४८५॥
मन्दे सुषुप्तिकाले स्यात् न दुःखं तत्र दृश्यते।
नात्युत्कटस्तदाऽऽनन्दो मन्दावरणमस्त्यतः॥४८६॥
विच्छिन्नं तु समाधौ स्याद् व्युत्थाने दुःखदर्शनात्।
यूनश्च स्त्रीपरिष्वङ्गे तथैव श्रुतिदर्शनात्॥४८७॥
भगवत्परम प्रेम्णि भवेन्मन्दतरं तु तत्।
भक्तिकालेऽपि भक्तानां मिष्टान्ना स्वाद दर्शनात्॥४८८॥
मोक्षे तु परमानन्दो निरावरणतुन्दिलः।
न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्॥४८९॥
एषोऽस्य परमानन्द इत्यादिश्रुतिदर्शनात्।
जीवन्मुक्तावधि तथा विदेहायां तु का कथा॥४९०॥
समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते
मैत्रायणीश्रुतावेवं जीवन्मुक्तस्य दर्शितम्।
वाचामगोचरं किंचित् स्वसंवेद्यं सुखं परम्॥४९१॥

जहां आनन्दावरण कहीं घनीभूत होता है निरन्तर चलता है वह दुःखमात्र होगा। सुखवार्ता दूर होगी। विरल आवरण होता है-जिस मिठाई में रेत पड गया उसे खाते समय क्योंकि बीच बीच में दुःख होता है। सुषुप्तिकाल में मन्द आवरण है। वहां दुःख नहीं है। फिर भी परमानन्द भी नहीं है। समाधि आनन्द विच्छिन्न कोटिका है। क्योंकि व्युत्थान में पूर्ववत् दुःख होता है। यथस्त्रिया

संपरिष्वक्त इत्यादि श्रुत्यनुसार स्त्रीसंपर्कादिजन्य सुख में विच्छिन्नावरण है। भगवत्परमप्रेम में मन्दतर आवरण रहता है। क्योंकि मिठाई आदि सामने आई तो उसे खाने में विशेष आनन्द भक्तों में भी देखने में आता है। मोक्ष में निरावरण परमानन्द है। श्रुति कहती है वह मृत्युरोग दुःखादि का अनुभव नहीं करता यह उसका परम आनन्द है इत्यादि श्रुतिवचन है। जीवन्मुक्ति में भी यही बात है, फिर विदेह मुक्ति में कहना क्या। 'समाधिनिर्धूतमलस्य' इत्यादि मैत्रायणी श्रुति में वाणी का अविषय स्वसंवेद्य सुख वहां बताया है।

**ये तु भक्तौ सर्वसुखं मुक्तावल्पसुखं जगुः।**
**उभयं ते न जानन्ति न वाग्वृत्तिरवाग्गतौ॥४९२॥**

जो भक्ति में सर्व सुख एवं मुक्ति में एक सुख कहते हैं वे दोनों को नहीं जानते। जो वाणी का अविषय है उसमें यह खण्डनमण्डनात्मक वाक् प्रवृत्ति कैसी? न शक्यते वर्णयितुं यह स्वयं श्रुति कहती है।

**यथा मेघः क्वचित्सान्द्रो मन्दोमन्दतरोपि चः।**
**विच्छिन्नश्चाऽऽवृणोतीन्दुं नानारूपस्तथाऽऽवृतिः॥४९३॥**

जैसे काला बादल हो, चन्द्रादि कुछ भी आसमान में नहीं दिखता, विरल में कटा कटा दिखेगा मन्द मन्दतर में कम बेसी दिखेगा। थोडी देर अच्छा दिखेगा। किन्तु फिर जुडने से नहीं दिखेगा। सर्वथा बादल के अभाव में स्पष्ट दिखेगा।

## अरिष्टनेमिः

**तार्क्ष्यस्तु गरुडः प्रोक्तः स च च्छन्दोमयो मतः।**
**अरिष्टनेमिरिति च तस्येहाह विशेषणम्॥४९४॥**

तार्क्ष्य का गरुड अर्थ बताया। छन्दोमयेन गरुडेन समुह्यमानः ऐसा भागवत में गजेन्द्र स्तुति में आया है। उसका विशेषण 'अरिष्टनेमिः' दिया।

**अरिष्टमशुभे चक्रे सूतिकागार आसवे।**
**शुभे मरणचिह्ने चेत्येवं कोशेषु दर्शितम्॥४९५॥**

विरुद्धमत्र कोशेऽर्थ-द्वयं स्पष्टं विलोक्यते।
शुभं चाप्यशुभं चैव कथ्यतेऽरिष्टशब्दतः ॥ ४९६ ॥
नेमिश्चक्रस्य भूस्पर्शिभागो गोलाकृतिर्मतः।
निघण्टौ नेमिशब्दश्च पठितो वज्रनामसु ॥ ४९७ ॥

अरिष्ट शब्द के चक्र सूतिकागार आदि अर्थ हैं ही, अशुभ तथा शुभ दोनों भी कोश में हैं। नेमि का-चक्र का भूमिस्पर्शी गोलाकृति भाग अर्थ है। निघंटु में वज्र अर्थ भी बताया है।

निदिध्यासनमेकात्मप्रत्ययावर्तनं मतम्।
सममावर्तते चक्रं रथस्य किल धावतः ॥ ४९८ ॥

निदिध्यासन एकात्मप्रत्ययवर्तन है और चक्र का घूमना भी सम आवर्तन ही तो है।

चक्रावर्तनसाम्येऽपि लक्ष्यं प्रत्येधते रथः।
प्रत्ययावृत्ति साम्येऽपि लक्ष्यं प्रत्येधते पुमान् ॥ ४९९ ॥

चक्रावर्तन सम है पर वह लक्ष्य की ओर बढता है। प्रत्ययावृत्ति में भी लक्ष्य ब्रह्म की ओर साधक बढता है।

आत्मसाक्षात्कृतिर्लक्ष्या प्रत्ययावर्तनस्य हि।
प्रत्ययावर्तनान्नित्यं ब्रह्मसाक्षात्कृतिर्भवेत् ॥ ५०० ॥

ज्ञानावर्तन का लक्ष्य आत्म साक्षात्कार है। नित्य आवर्तन से साक्षात्कार होता है।

ब्रह्मदर्शनमेवात्र परमं शुभमिष्यते।
वासनामयसंसारस्तथैवाशुभ उच्यते ॥ ५०१ ॥
शुभनेमिःप्रापयति ब्रह्मदर्शनमुत्तमम्।
संसृतेरशुभायाश्च वज्रं नेमिर्भनक्ति ताम् ॥ ५०२ ॥

शुभ ब्रह्मदर्शन का प्रापक चक्रनेति और अशुभ संसार वासना का भञ्जक नेमि गरुड है। (तार्क्ष्य)

श्रवणे परमे वृद्धश्रवसा प्रापिते सति।
मनने च तथा सम्यक् कारिते विश्ववेदसा ॥ ५०३ ॥

अरिष्टनेमिना चैव ध्याने तार्क्ष्येण लम्भिते।
शुभं प्रवर्धते नित्यमशुभं च निवर्तते॥५०४॥

वृद्धश्रवा-श्रवणवर्धक गरुड ने परम श्रवण कराया। सर्वज्ञ ने सम्यक् मनन कराया। तार्क्ष्य ने ध्यान भी कराया तो शुभ ज्ञान वृद्धि और अशुभ संसृतिवासनानिवृत्ति होती ही है।

अरिष्टमशुभं चैव मृत्युचिह्नं च कथ्यते।
मृत्योः स मृत्युमाप्नोति मृत्युचिह्नं च वासना॥५०५॥
मृत्योः स मृत्युमाप्नोति वासनाबद्धमानसः।
कर्मसाचिव्यमत्रेति निश्चिन्वन्ति विपश्चितः॥५०६॥

अरिष्ट अशुभ तथा मृत्यु चिह्न को कहते हैं। अशुभ पुण्य पाप दोनों है। मृत्युचिह्न वासना है। मृत्यु से एक मृत्यु नहीं। मृत्योः स मृत्युमाप्नोति महामृत्यु। वह वासना से होगी। कर्म केवल सहयोगी होगा।

यं यं भावं स्मरन् प्रेयात्तं भावं देह्यवाप्नुयात्।
जातस्य च ध्रुवो मृत्युरिति गीतासु दर्शितम्॥५०७॥
श्रवणं मननं चैव नित्यमेव प्रकुर्वतः।
संसारवासना तस्य क्रमात् प्रक्षीयते यतः॥५०८॥
मामनुस्मर सर्वेषु कालेष्वित्याह माधवः।
भगवद्वासनैवातो धुनोति भववासनाम्॥५०९॥

वासनानुसार जिस भाव को स्मरण कर प्राणी मरता है उसी भाव को वह जन्मान्तर में पाता है। और जो पैदा हुआ वह निश्चित मरता है। फलतः वासना ही जन्म मरण का मूल हुआ। नित्य श्रवण मनन से संसार वासना क्रमशः नष्ट होती है इसीलिये हमेशा भगवत्स्मरण करने बताया। वही वासना संसारवासनानाशिनी है।

धर्ममेघसमाधिश्च तस्य सम्पद्यते तदा।
वर्षत्येष परा धर्माऽमृतधारा सहस्रशः॥५१०॥
रिषिर्हिंसार्थकोऽरिष्टममृतं तेन कीर्त्तितम्।
नेमिस्तन्नयतीत्यस्मान्नियोमिरमृतापनः॥५११॥

भव वासना क्षय से धर्म मेघ समाधि लगती है जिससे धर्मामृत धारायें बहती हैं। रिष हिंसायां, रिष्ट का मृत अर्थ है। उससे विपरीत अमृत अरिष्ट को प्राप्त कराता है। नियो मिः नेमि नी प्रापणे धातु से मि प्रत्यय और गुण होने से नेमि होता है।

**संसारो विषरूपत्वाद् रिष्टं स्याद् हिंसितं मृतम्।**
**गरुडो विषहारी सोऽमृतवाट् प्रथितो भुवि॥५१२॥**

संसार विषरूप होने से रिष्ट हिंसित मृत है। गरुड विषहारी प्रसिद्ध है और अमृतवाहक जगत में प्रसिद्ध है।

## स्वस्ति नो बृहस्पतिर्दधातु

**इन्द्रः श्रवणवृद्ध्यर्थं बलार्थं चादितः स्तुतः।**
**श्रुतार्थपोषणः पूषा मननार्थं ततो नुतः॥५१३॥**
**निदिध्यासनसिद्ध्यै चारिष्टिनेमिस्ततोऽर्थितः।**
**प्रतिबन्धक धूत्यै च प्रार्थ्यतेऽतो बृहस्पतिः॥५१४॥**

श्रवण वृद्ध्यर्थ बलार्थ इन्द्र स्तुति है। श्रुतपोषणार्थ मननार्थ पूष स्तुति है। एवं निदिध्यासन सिद्धि के लिये अमृतवाहक तार्क्ष्य स्तुति के बाद सर्व प्रतिबन्धकनाशार्थ बृहस्पति स्तुति करते हैं।

**यन्मे छिद्रं चक्षुषोऽस्ति हृदश्च मनसोऽपि च।**
**अतितृष्णं हिंसितं यत् तद्धातु बृहस्पतिः॥५१५॥**
**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।**
**मध्ये मध्येऽदर्शनं तु चक्षुषश्छिद्रमुच्यते॥५१६॥**

यन्मे छिद्रं इत्यादि यजुर्मन्त्र है, 'यो मां पश्यति' के अनुसार ब्रह्म को सर्वत्र देखना। सब को ब्रह्म में देखना है। बीच में न दिखना चक्षु का छिद्र है। यह दर्शन का छिद्र है।

**हार्दब्रह्मास्पदमति - वृत्तयो हृदये मताः।**
**छिद्रं तत्रैव विषय-स्मृतयो मध्यमागताः॥५१७॥**
**यद्वाऽऽसुप्तेरामृतेश्च कालं वेदान्तचिन्तनम्।**
**हृदयं, तस्य च च्छिद्रं मध्ये विषयचिन्तनम्॥५१८॥**

हृदय ब्रह्ममतिवृत्तिरूपी हृदय का छिद्र बीच में विषय स्मृति है। अथवा सर्वदा वेदान्त चिन्तन 'आसुप्तेः' इत्यादि में बताया है। मध्य में विषयचिन्तन छिद्र है। यह चिन्तन छिद्र है।

**समाधेयं मनः सम्यङ् निर्विकल्पे परात्मनि।**
**तदाऽन्यविषयोन्मेषो मनसश्छिद्रमुच्यते ॥ ५१९ ॥**
**वेदान्तचिन्तनं तावदनेकाकारमीरितम्।**
**एकाकारं समाधानमित्येवमुभयोर्भिदा॥५२०॥**

निर्विकल्प ब्रह्म में मनः समाधान करना चाहिये। तब अन्य विषय आये तो वह मन का छिद्र है। पूर्वोक्त वेदान्त चिन्तन से इस में क्या फरक है? वेदान्त चिन्तन अनेकाकार है। मनःसमाधान एकाकार वृत्ति प्रवाह है।

**अपाठि धातुरुतृदिर् हिंसानादरयोस्ततः।**
**तृण्णं स्याद् हिंसितं चानादृतं चाप्यतिपूर्वकम्॥५२१॥**
**नष्टप्रायं भवति चेद् हिंसितं तदुदीरितम्।**
**फलवैकल्यतोऽनास्था साधने स्यादनादरः॥५२२॥**

'उतृदिर् हिंसानादरयोः' धातु से तृण्णं होता है। उसमें 'अति' उपसर्ग है। नष्ट प्राय और अनास्था से अनादर होता है।

**प्रथमं जातमखिलं ब्रह्मैवेति हि दर्शनम्।**
**केनचिद्धेतुना नष्टप्रायं पश्चादभूद्यदि॥५२३॥**
**वेदान्तचिन्तनं पूर्वं निरन्तरमजायत।**
**नानाव्यवहृतिप्राप्ते तदुच्छिन्नमिवाभवत्॥५२४॥**
**ध्यानमग्नोऽभवत् पूर्वं व्याधिस्त्यानादिना पुनः।**
**यत्नतोऽपि तथा नैवेत्येवं सर्वं हि हिंसितम्॥५२५॥**

सर्वत्र समदर्शन प्रथम होने लगा था फिर वह गायब हो गया। वेदान्त चिन्तन पहले खूब चलता रहा। बाद में व्यवहार में पड गया तो टूट गया। पहले ध्यान मग्न रहता था व्याधि आदि से बाद में यत्न करने पर भी ध्यान नहीं लगता। यह सब हिंसित है, तृण्ण है।

अनादरो व्यर्थमेव सर्वत्र समदर्शनम्।
वेदान्तचिन्तनं ध्यानं सर्वं चैवेति दुर्मतिः ॥५२६॥

कुतर्कादि से समदर्शन वेदान्त चिन्तन एवं ध्यान में अनादर तृणता है।

बृहती वाक् पतिस्तस्या बृहस्पतिरिति श्रुतिः।
अर्थयुक्ता च वागत्र मन्त्रे तावद्विवक्षिता॥५२७॥
स स्वकीयवचोमात्रादपि स्वस्ति भवत्विति।
कर्तुं शक्नोति कल्याणमतः स प्रार्थ्यते शिवम्॥५२८॥

बृहती वाक् तस्या एष पतिः ऐसी श्रुति है। अर्थ सहित वाणी विवक्षित है। वह स्वस्त्यस्तु कह दे तो भी कल्याण होगा अतः उसके प्रति यह प्रार्थना है।

बृहद् ब्रह्मेति वेदेऽपि लोकेऽपि प्रथितं पदम्।
ब्रह्मवेदस्तस्य पति-रप्येष स्याद् बृहस्पतिः ॥५२९॥

बृहत् का ब्रह्म अर्थ और बह्म का वेद अर्थ भी लोक प्रसिद्ध है। उसका पति तो सर्व समर्थ होगा। वेदमन्त्रों की शक्ति अपार है ही।

यद्वेदवाक्प्रभावेण कल्याणं नो भवेद्भृशम्।
तं प्रयुज्यास्मदुद्धारं स दधातु बृहस्पतिः॥५३०॥

वेदपति होने से जिस वेदमन्त्र के प्रभाव से हमारा उद्धार हो उसका प्रयोग करो यह तात्पर्य है।

बृहतां पतिरित्यर्थमपरे प्रतिपेदिरे।
स किं खलु न शक्नोति सर्वेषां महतां पतिः॥५३१॥
श्रवणं मननं चैव निदिध्यासनमेव च।
सम्यक्कर्तुं प्रभुरसाविति स प्रार्थ्यते मुदा॥५३२॥

बृहतां पतिः ऐसा विग्रह भी दिखाया है। समस्त महानों के पति सर्वसमर्थ होगा ही वह श्रवणमनननिदिध्यासनों को सम्यक् बना सकते है। अतः उनकी यह प्रार्थना है।

बृहत्वाद् बृंहयतु नः श्रवणादिं बृहस्पतिः।
विद्यार्थिनां स तेनैव स्वस्ति नः कुरुतात् प्रभुः॥५३३॥

स्वयं बृहन् ही बृहस्पति होगा। हमारे श्रवणादि को वह बृंहण करे। उसी से हम विद्यार्थियों का वह प्रभु कल्याण करें।

ॐ शान्तिः शान्तिः शान्तिः।

**व्याधिस्त्यानादयो ये स्युरुपसर्गाः शरीरगाः।**
**पूर्वपापभवा वा स्यु-रिहासंयमजा उत॥५३४॥**
**प्रमादसंशयाद्याश्च मानसा बहुधोत्थिताः।**
**आध्यात्मिका इति प्रोक्ता ज्ञानोत्पत्तिविघातकाः॥५३५॥**

व्याधि स्त्यान (अकर्मण्यता) आदि शरीरगत उपसर्ग हैं। पूर्व जन्मीय पाप के कुछ हैं और कुछ तो इस जन्म में किये असंयम का परिणाम है। वैसे संशय प्रमादादि मानसिक उपसर्ग हैं। ये सब ज्ञानोत्पत्ति में प्रतिबन्धक हैं। ये शारीर तथा मानस दोनों आध्यात्मिक उपसर्ग हैं।

**अलब्धभूमिकत्वं च लब्धायां चानवस्थितिः।**
**भ्रान्तिदृष्ट्यादयश्चैव क्वचनैते हि देवजाः॥५३६॥**
**प्रीणन्ति ये न स्वीयानां पशूनामूर्ध्वगामिताम्।**
**तत्कृता उपसर्गास्ते दर्शिता आधिदैविकाः॥५३७॥**

प्रयत्न करने पर भी योग भूमिका प्राप्त नहीं होती, प्राप्त होने पर भी टिकती नहीं है ये आधिदैविक उपसर्ग हैं। अविरति भ्रान्ति दर्शनादि क्वचित देवज है क्वचित स्वप्रमादज हैं। क्यों देवज हैं? देवता नहीं चाहते कि ये मनुष्य हमसे भी ऊपर जायें जो आज हमारे पशु जैसे सेवक हैं। इनके ये उपसर्ग आधिदैविक हैं।

**पूर्वजन्मकृताघानां प्रतिशोधाय कर्मणाम्।**
**वृश्चिका देशमशका येऽमी व्याघ्रादयश्च ये॥५३८॥**
**तदुद्भवबहुक्लेशा उपसर्गास्तपस्विनाम्।**
**ते त्वाधिभौतिकाः प्रायो वनादौ वसतां सताम्॥५३९॥**

पूर्वजन्मकृत हननादि पापकर्म के प्रतिशोधार्थ बिच्छू, मच्छर आदि एवं व्याघ्रादि बनकर तपस्वियों के तप में उपसर्ग डालते है प्रायः एकान्त

वनादि में रहनेवालों के ये आधिदैविक है।

आध्यात्मिकादय इमे उपसर्गास्त्रयः खलु।
सर्वेषामेव बहुशो दृश्यन्ते देहिनां भुवि॥५४०॥
ततस्तदुपशान्त्यर्था त्रिः शान्तिः पठ्यते बुधौः।
उपसर्गप्रशान्तौ हि सद्विद्या कल्पतेऽञ्जसा॥५४१॥

आध्यात्मिकादि ये तीन उपसर्ग सबके देखने में आते हैं। उनकी शान्ति के लिये तीन बार शान्ति कही जाती है जिससे उपसर्ग शान्त हो और विद्या आराम से प्राप्त हो।

ननूपसर्गाः सर्वेषां दृश्यन्ते देहिनामिह।
न शान्तिपाठमात्राच्च विलीयन्तेऽखिला इमे॥५४२॥
एतच्छमनतो ज्ञानं जायमानं यदीष्यते।
ब्रह्मविद्या तदा नूनं खसुमायिष्यते भुवि॥५४३॥
ज्ञानिनामपि दृश्यन्ते असाध्या आमयादयः।
जिज्ञासूनां तु किं वाच्यं प्रारब्धं कर्म दुर्हरम्॥५४४॥

पू. - ये उपसर्ग-क्लेश समस्त प्राणियों को होते हैं। शान्तिपाठ से विलीन भी नही होते। इन क्लेशों के शमन होने पर ही यदि ज्ञान होता हो तो ब्रह्मविद्या आकाश पुष्पमात्र होगी। बल्कि जो ज्ञानी माने गये हैं उनके भी ये सब क्लेश होते हैं। जिज्ञासुओं की बात क्या? प्रारब्ध तो भोगना ही पडता है।

अत्रोच्यते सत्यमुक्तं प्रारब्धं दुर्हरं नृणाम्।
तथापि पापशैथिल्य - मुपायेनोपजायते॥५४५॥
नन्वल्पं किन्तु दृङ्क्ष्यन्ति दंशाः शान्तिप्रपाठिनम्।
न चैतच्छक्यते श्रद्धाचित्तादन्यत्र भाषितुम्॥५४६॥
जघान पाणिनिं व्याघ्रो जैमिनिं कुञ्जरो न्यहन्।
पिङ्गलं मकरोऽहिंसीत् प्रारब्धं हि जहाति कम्॥५४७॥

इस पर हमारा कहना यह है प्रारब्ध दुर्हर हो, पर उसको शिथिल किया जा सकता है। क्या मतलब? मच्छर कम काटेंगे। शान्ति पढने पर

यह तो श्रद्धामात्र है। पाणिनि को व्याघ्र ने मारा, जैमिनि को हाथी ने मारा, पिंगल को मगर खा गया।

शूलायतेऽघिनां कीलः शूलं कीलायते सताम्।
लोकोक्तिः सर्वथा नैषाऽमूला भवितुमर्हति॥५४८॥

पापियों की कील भी शूल बन जाती और पुण्यात्माओं का शूल भी कील होकर रह जाता है इत्यादिं लोककथा सर्वथा निर्मूल नहीं हो सकती।

औग्र्याभावेऽपि शान्तिः स्यात् शान्तो दान्तोऽपि युज्यते।
ज्वालानिःसरणेऽप्येव शान्तोऽग्निरिति कथ्यते॥५४९॥

उग्रता का अभाव होने मात्र से भी शान्ति मानी जाती है। ज्वाला समाप्त होने पर अग्नि शान्त हो गयी कहते हैं। भले राख में अंदर अग्नि हो कोलसा हो। शान्तो दान्ते रसान्तरे ऐसा कोश है। क्रोधादि दमन होने पर मनुष्य शान्त होता है।

स्वकार्यकरणाभावादपि शान्तिरुदीर्यते।
उपसर्गा यदा पाठविघातादि न कुर्वते॥५५०॥

उपसर्ग अपने कार्य विघ्न न कर पाये इतने से उनकी शान्ति मानी जाती है।

सकलं शान्तिपठनं शिष्टैराचरितत्वतः।
विघ्नशैथिल्यमात्रेणाप्येतदस्योपपद्यते ॥५५१॥

शिष्टाचरित होने से शान्तिपाठ सफल है। विघ्न शैथिल्य भी सफलता है।

मङ्गलाचरणात्मत्वं शान्तिपाठस्य के चन।
वाञ्छन्ति किल विद्वांसो न तद् भाष्यकृतोदितम्॥५५२॥
विघ्नप्राचुर्यसत्त्वे तु कार्यं बहुलमङ्गलम्।
न चैतत् क्रियेत शिष्टैः पाठस्य नियतत्वतः॥५५३॥

शान्तिपाठ को कुछ लोग मंगलाचरण मानते हैं। किन्तु विघ्न बहुत हो तो बहुत शान्ति पढने का शिष्टाचार नहीं है। जैसे मंगलाचरण के बारे में

कहते हैं।

**न वा रचयितुर्विघ्नशान्तये शान्तिरुच्यते।**
**वेदस्यापौरुषेयत्वात्ताद्दृग्विघ्नाद्यसत्त्वतः ॥५५४॥**

ग्रन्थरचयिता का विघ्न निवारणार्थ समाप्ति संपत्त्यर्थ मंगल हो ऐसी भी बात नहीं है। क्योंकि वेद अपौरूषेय हैं।

**स्वातन्त्र्येण न पाठश्चेच्छान्तीनां क्रियते तदा।**
**पुण्यं फलं लिङ्गतश्च शान्तिरेव सतां फलम्॥५५५॥**

स्वाध्यायाध्ययनार्थ नहीं किन्तु स्वतन्त्ररूप से शान्तिपाठ करते हैं तो भी वेदपाठ पुण्य होगा ही। शान्तिलिङ्ग से शान्तिप्राप्ति फल भी होगा।

**मन्त्राणां च जपोऽप्येव प्रसिद्धो वेदवेदिषु।**
**तथा च मन्त्रावृत्तिश्च पुण्याधिक्यादि वाञ्छताम्॥५५६॥**

मन्त्र जप प्रसिद्ध है। अतः अधिक-पुण्यादि के लिये मन्त्रावृत्ति भी हो सकती है।

**इति श्रीकाशिकानन्दगिरिणा कृतिना कृतम्।**
**नवमं सर्ववेदीय शान्तिव्याख्यानवार्तिकम्॥**



# ॐ

**ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तँ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥**
**ॐ शान्तिः शान्तिः शान्तिः॥**

यो=जो (देव), पूर्वं=सर्वप्रथम, ब्रह्माणं=ब्रह्माजी को, विदधाति=उत्पन्न करता है, च=और, यो=जो वै=निश्चितरूप से, तस्मै=उस (ब्रह्मा) को वेदान्=वेदों को, प्रहिणोति=प्राप्त कराता है, तं=उस, ह=प्रसिद्ध आत्म बुद्धि प्रकाशं=आत्मा और बुद्धि को प्रकाशित करनेवाले, देवं=स्वयं प्रकाश देव को अहं=मैं, मुमुक्षुः=मुमुक्षु होकर वै=निश्चयरूप से, शरणं प्रपद्ये=शरणापन्न होता हूं।

**नमः स्वयं प्रकाशाय ह्यात्मबुद्धिप्रकाशिने।**
**पूर्वेषां चापि गुरवे संप्रदायप्रतायिने॥१॥**

स्वयं प्रकाश होता हुआ ही आत्मा और बुद्धि को प्रकाशित करनेवाले पूर्व जातों के भी गुरु संप्रदायप्रवर्त्तक देव को हम नमन करते हैं।

**प्राप्तव्या ब्रह्मविद्या हि संप्रदायपुरःसरम्।**
**आवश्यकी मुमुक्षूणां श्रीगुरोः शरणागतिः॥२॥**

संप्रदाय पुरःसर ब्रह्मविद्या प्राप्त करना चाहिये। तदर्थ गुरु शरणागति भी आवश्यक है।

**ननु कस्य तु कर्त्तव्या गुरोर्हि शरणागतिः।**
**गुरवः सन्ति बहवो नानाबोधविधायिनः॥३॥**
**न चैकस्माद्धि सकल-मध्येयमिति सांप्रतम्।**
**तदयोगात् तथा चोक्तं श्रीमद्भागवते स्फुटम्॥४॥**
**न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम्।**
**ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः॥५॥**

पू. - 'शरणमहं प्रपद्ये' यह शरणागति किस गुरु की करें? नाना बोधकारी गुरु अनेक होते हैं। एक ही गुरु से सीखो। नहीं। भागवत में कहा है-एक गुरु से पुष्कल ज्ञान नहीं हो पायेगा। अनेक ऋषियों ने अनेक प्रकार से अद्वितीय ब्रह्म.का किया है।

न च स्वीक्रियतां सर्वगुरूणां शरणागतिः।
इति वाच्यमशक्यत्वाद् भिन्नस्वाभाव्यतोऽपि च॥६॥

सभी गुरुओं की शरणागति स्वीकार लो। नहीं। यह अशक्य है। गुरुओं का स्वभाव भी तो अलग-अलग होता है।

आनुकूल्यस्य संकल्पः प्रातिकूल्यविवर्जनम्।
रक्षिष्यतीतिविश्वासो गोप्तृत्वे वरणं तथा॥७॥
आत्मनिक्षेपकार्पण्ये षोढा हि शरणागतिः।
एकत्र स्वात्मनिक्षेपे स परत्र कथं भवेत्॥८॥

अशक्य इसलिये कि आनुकूल्य संकल्प, प्रतिकूल त्याग, रक्षा विश्वास, रक्षकत्वेन वरण, स्वयं का समर्पण तथा दीनता इन षड्विध शरणागति में एक को समर्पण किया तो दूसरे को कैसे करेंगे?

अत्रोच्यते परं ब्रह्म परमो गुरुरुच्यते।
स च सर्वेषु गुरुषु गुरुरूपेण तिष्ठति॥९॥
परिपक्वमलान् ज्ञानशक्तिपातेन योजयेत्।
परे तत्त्वे ददद्दीक्षां गुरुमूर्त्तिस्थितः स च॥१०॥

उ. - उत्तर यह है पर ब्रह्म ही परम गुरु है। सब गुरुओं में वही गुरुरूप से स्थित है। निर्मल शिष्यों में ज्ञान शक्तिपात कर दीक्षा से गुरु शरीर स्थित होकर वही परम तत्त्व में जोडता है।

श्रीमद्भागवते चैतद् व्यासेनापि निरूपितम्।
ब्रह्मैव परमार्थं तु ज्ञानं यच्छेद् गुरुस्थितः॥११॥
कस्मै विभासितो ज्ञानदीपस्तद्रूपतः पुनः।
नारदाय च तद्रूपाद् व्यासायेत्यादिना क्रमात्॥१२॥

यही भागवत में भी कहा-परमात्मा ने ब्रह्मा को ज्ञानदीप प्रकाशित किया। वही ब्रह्मारूप में नारद को और नारदरूप में वही परमात्मा व्यास को तत्त्व बताया इत्यादि।

अत एवात्र मन्त्रेऽपि देवं यत्पदशब्दितम्।
प्रपन्नः शरणं साक्षा-न्न ब्रह्माणं न चापरम्॥१३॥

तत्कार्य धनादि से लोग बन्धन अनुभव करते हैं। यद्यपि सुषुप्ति में बन्धनानुभव नहीं होता लेकिन सर्वदा सुषुप्ति में पडे रहना कोई पसंद नहीं करता। उस समय अज्ञान का बोलबाला है। अज्ञान से लोग डरते हैं। अतः अज्ञान बन्धन है। धनादि को बन्ध कोई नहीं समझता। पर धन नाशादि भय होने से विवेचकों को यह भी बन्धन दिखता है। इसलिये अज्ञान तत्कार्य निवृत्ति मोक्ष है। उसकी निवृत्ति के लिये ईश्वर की शरण में जाना आवश्यक है।

**भयाद्धि लोकाः शरणं यान्तीशमभयप्रदम्।**
**निर्भयत्वं ततो मोक्ष इति संक्षिप्य कथ्यते॥२८७॥**
**अभयं वै जनक भो प्राप्तोऽसीत्याह भूपतिम्।**
**याज्ञवल्क्यो हि जनकं तद्धि स्याज्जीवतोऽपि हि॥२८८॥**

परंतु लोग किसी की शरण में जाते हैं तो किसी भय से, डर के मारे। अतः संक्षेपतः निर्भयता ही मोक्ष है। **अभयं वै जनक प्राप्तोसि** ऐसा याज्ञवल्क्य ने भी कहा।

**ननु चाऽभावरूपैषा निवृत्तिः शून्यलक्षणा।**
**न शून्यं कश्चन जनो वाञ्छतीह भुवस्तले॥२८९॥**
**न च वैनाशिकाः शून्यं वाञ्छन्ति किल बोधिनः।**
**इति वाच्यमिदं तावद् व्याहतं वचनं यतः॥२९०॥**
**प्राप्ये प्राप्तौ प्राप्तरि च सति वाञ्छा प्रवर्तते।**
**त्रयाभावे नैव वाञ्छा कथंचिदपि संभवेत्॥२९१॥**
**किं प्राप्तुं वाञ्छति भवान् वाञ्छा निर्विषया न यत्।**
**स्वयं नो चेत्तु कः प्राप्ता प्राप्यं किं शून्यवादिनः॥२९२॥**
**शून्यं नाम महत् किंचिन्मोदकं विद्यते दिवि।**
**इति बभ्रमुरल्पज्ञाः शून्यवादिप्रतारिताः॥२९३॥**

पू. - भयादि निवृत्ति शून्यरूप है असत् है उसे कौन चाहेगा? कहो कि शून्यवादी चाहेगा, पर यह व्याहत वचन है प्राप्य, प्राप्ति और प्राप्त इन तीन के होने पर इच्छा होती है। आप क्या चाहते हैं? कुछ

नहीं। आप आगे प्राप्त समय रहेंगे? नहीं, आपको वाञ्छित प्राप्ति होगी? नहीं। अब बताईये इच्छा कैसे। अल्पज्ञ लोगों ने समझा कि स्वर्ग में शून्य नाम का एक बडा लड्डू है वह मिलेगा। उन्हीं को शून्यवादीयों ने ठगा।

अत्र ब्रूमोऽभयं तावत् पुरुषार्थप्रयोजकम्।
यतो हि परमानन्द स्वरूपप्राप्तिरिष्यते॥ २९४॥

उ. - इसका उत्तर यह है कि अभय ही मोक्ष नहीं है। वह मोक्ष प्रयोजक है। अभय से परमानन्दरूपी स्वरूप प्राप्ति होती है वही पुरुषार्थ है। अतः शब्द विषय भयाभाव को ही मोक्ष बताया।

अभये हि परानन्दः प्रादुर्भवति निर्मलः।
मेघापाये यथा सूर्यः प्रादुर्भवति पश्यताम्॥ २९५॥
प्राप्तिर्हि तस्यस्फुरणमात्मत्वाद् भेदवर्जितम्।
परमश्चाऽनतिशयो दुःखाऽसंभिन्न एव च॥ २९६॥
तस्य स्वरूपभूतत्वात्प्रार्थनीयो न विद्यते।
ततो भयनिवृत्तिर्हि प्रार्थ्यते शरणार्थिना॥ २९७॥
द्वितीयाद्वै भयमिति श्रुतेर्भीति प्रयोजकम्।
प्रार्थ्यते द्वैतमेवात्र निवर्तयितुमागमे॥ २९८॥

अभय होने पर परमानन्द प्रादुर्भूत होगा। जैसे मेघ हटने पर ही सूर्य प्रकट होता है आनन्द का स्फुरण ही तत्प्राप्ति है। आत्मस्वरूप होने से प्राप्य प्रापक भेद भी नहीं है। परम का अर्थ है निरतिशय। पर वह स्वरूप होने से प्रार्थनीय नहीं है। अतः बाधक भय की निवृत्ति ही प्रार्थनीय होने से वही मुमुक्षुता है। वस्तुतः 'द्वितीयाद्वैभयं' श्रुति से भय प्रयोजक द्वैत के छुटकारे की ही यह प्रार्थना है। शरणागति है।

इममेव जगौ योगं गीतायां भगवान् स्वयम्।
तं विद्याद्दुःखसंयोगवियोगं योगमित्यतः॥ २९९॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥ ३००॥

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रितम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥३०१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते॥३०२॥
इत्येवं दर्शयामास भगवांस्तस्य लक्षणम्।
जीवन्मुक्तिरपीहातः स्वीकृतो हरिणा स्वयम्॥३०३॥
दुःखेन गुरुणाप्येव न विचाल्यत इत्यतः।
विदेहमुक्ते पुरुषे दुःखप्राप्तेरभावतः॥३०४॥
मोक्षो मुमुक्षुशब्देऽपि जीवन्मुक्तिश्च सुग्रहा।
तदर्थं युज्यते देवशरणागतिरेव च॥३०५॥

इसी मोक्ष को गीता में योग शब्द से कहा है। योग जोडने को नहीं वियोग को कहते है। दुःख संयोग वियोग ही योग है। उसका विवरण प्रथम दिया-साधनयोगसेवन से निरुद्ध होकर चित्त उपरत होता है (बाहर भागता नहीं) जब अपने से आत्मदर्शन कर आत्मा में तुष्ट हो जाता है, जब अतीन्द्रिय बुद्धि मात्र ग्राह्य आत्यन्तिक सुख का अनुभव करते हैं और जहां स्थित चित्त चलित नहीं होता, जिस सुख को पाकर उससे अधिक कोई लाभ नहीं मानते, जिस में स्थित पुरुष भयंकर दुःख से भी विचलित नहीं होता वह है परमार्थ योग। इस वर्णन में भगवान ने जीवन्मुक्ति को भी मोक्षात्मक योग स्वीकार किया। क्योंकि विदेह मुक्ति में दुःख नहीं होता तो भारी दुःख से विचलित होने की बात ही कैसे उठती जिसका निषेध किया जाय। उस जीवन्मुक्ति के लिये देव शरणागति युक्त ही है। शरणं प्रपद्ये।

सूत्ररूपेण तदिदं श्रुतिः सर्वं न्यरूपयत्।
अहं मुमुक्षुः शरणं प्रपद्य इति वाक्यतः॥३०६॥

सूत्र रूप से मुमुक्षुर्वै शरण महं प्रपद्ये इस प्रकार श्रुति ने इन सब बातों को बता दिया है।

मन्त्रे वैशब्दतो मोक्षे ह्यविकल्पा मुमुक्षुता।
इतरेच्छानधीनेच्छाविषयत्वं तु सूच्यते॥३०७॥

अन्य फलेच्छानधीन मोक्षेच्छा बताने के लिये मन्त्र में वै पद है।

**प्रकाशमानपरमानन्दो मोक्षस्ततः स्थितः।**
**पूर्वदर्शितयोगत्वं मोक्षस्य तत ईरितम्॥ ३०८॥**

इसी के लिये हमने मोक्ष में पूर्वव्याख्यात योगत्व कहा।

**यद्योगसेवयेत्युक्ते योगोऽयं साधनात्मकः।**
**शरणागतिरूपः स आत्मनिक्षेपलक्षणः॥ ३०९॥**
**संकल्पप्रभवान् कामानित्यादिकमशेषतः।**
**अन्तर्भवति तत्रैव ह्यन्येच्छाविरहादिति॥ ३१०॥**

यद्योगसेवया इस गीतावचन में योग साधनात्मक शरणागति आत्म निक्षेप है। संकल्पप्रभवान् कामान् त्यक्त्वा इत्यादि सभी अन्येच्छा न होने से इसी में अन्तर्भूत है।

**ऐक्यभावनया वा य आत्मनः परमात्मनि।**
**निक्षेपोऽब्धौ बिन्दुवत् स आत्मनिक्षेप इत्यपि॥ ३११॥**

जैसे समुद्र में बिन्दु का निक्षेप कर एकीकरण होता है वैसे आत्मा को परमात्मा में भावना से एकात्मता लाना भी आत्मनिक्षेप है।

**उपसर्गास्त्रयो ये स्युरस्मिन्नाध्यात्मिकादयः।**
**तच्छान्तये त्रिरत्रापि पठिता शान्तिरोमिति॥ ३१२॥**

त्रिविधोपसर्ग शमनार्थ तीन बार शान्ति पठन ॐ इत्यादि से है ॐ।

**इति श्रीकाशिकानन्दगिरिणा कृतिना कृतम्।**
**दशमं याजुषं वृत्तं शान्तिव्याख्यानवार्तिकम्॥ ३१३॥**
**वसुभूतखनेत्राब्दे पञ्चम्यां फाल्गुने रवौ।**
**पूर्णतामेतदगमत् शान्तिव्याख्यानवार्त्तिकम्॥ ३१४॥**

ॐ तत् सत्





द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः
शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः
शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः
शान्तिरेव शान्तिः सा मा शान्तिरेधि ।।
।। ॐ शान्तिः शान्तिः शान्तिः ।।

द्वादशदर्शनाचार्य - महामण्डलेश्वर अनन्त श्री स्वामी काशिकानन्दगिरिजी महाराज